ध्यान। तेजो विन्दु। योग शिक्षा। योग तत्त्व। संन्यास। कण्ठ श्रुति। आत्म। महा। कठवल्ली। नारायण। बृहन्नारयण। महा नारायण। सर्व। हस। परम हंस। कालाग्नि रुद्र। राम तापनी। जाबाल। आश्रम। पिण्ड। शिरम्। शिक्षा। नृसिंहतापनी। गरुड़।

ये जितनी उपनिषदें ऊपर दी गयी हैं, सब माननीय तो नहीं; परञ्च तो भी पाठकों के ज्ञानवृध्यर्थं आवश्यक जान उन के नाम हमने दिये हैं। समग्र १०८ उपनिषदों का गुटका बम्बई में प्रकाशित मिलता है उसमें ये सब प्राय: मिलती हैं।

शिक्षा—अथर्ववेद को शिक्षा माण्डूकी शिक्षा बहुत प्रसिद्ध है। यह यत्र तत्र अनेक प्रेसों में छपी मिलती है, परञ्च जो दयानन्द कालिज रिसर्च विभाग में पं० भगवद्दत्त ने सम्पादन को है, वह बहुत सुन्दर शुद्ध और पठनीय है।

**स्मृति**—(पंठीनसी) पैठीनसी आचार्य के नाम से अथर्ववेदीय का एक धर्मशास्त्र प्रसिद्ध है। एक मत है कि उसका एक धर्मशास्त्र गद्य-पद्यात्मक है, दूसरा मत है कि वह सूत्रों में है। पैठीनसी अनेक हुए हैं। अथर्व परिशिष्ट में एक पैठीनसी को मौसली पुत्र कहा गया है। (देखो The atharva veda P. 18)।

## लेख सामग्री

मैंने ग्रन्थ सम्पादन में जिन हस्त लिखित पुस्तकों की तथा ह्विटने के भाष्य में आये हुए दो आदर्शों की सहायता ली है। वे कहां से मिले किस प्रकार के हैं और किस आयु के हैं, इसका वर्णन क्रमशः किया जाता है—

(१) क जिस आदर्श पुस्तक का हमने (क) नाम दिया है, वह हमें भण्डारकर इन्स्टीट्यूट (Bhandarkar Institute) पूना से मिली है। 'उसकी लम्बाई १३ अङ्गुल और चौड़ाई ६ अं० है। पत्र संख्या ८७ है' प्रति पत्र में प्रायः दश पंक्तियें हैं और प्रति पंक्ति में प्राय: २५ अक्षर हैं। यह पुस्तक देवनागरी अक्षरों में है। देशी पत्र पर लिखी हुई है। अक्षर स्पष्ट और पठनीय हैं। कहीं-कहीं लेख इतना मिलाकर लिखा है कि पढ़ा नहीं जाता। पत्रों के दोनों ओर पार्श्व में दो-दो काली रेखायें हैं और बीच में लाल रेखा दी हुई है। यह ग्रन्थ पूर्ण नहीं, इसकी समाप्ति दशम

★ ओ३म् ★

# अथ बृहत्सर्वानुक्रमणिका

[ॐ ब्रह्मवेदं नमस्कृत्य दुर्गां विघ्नेश्वरं गुरुम् ।
नृसिंहदक्षिणामूर्त्तिमथर्वाणमभेदतः ॥
आविष्कुर्वे ब्रह्मवेदं मन्त्रानुक्रमणीं यथा ।
ऋषिदैवतछन्दोभिर्युक्तां पाठफलाप्तये ॥][1]

ॐ अथाथर्वण गणमन्त्राणामृषिदैवतछन्दांसि । 'यत्काम ऋषिर्मन्त्रद्रष्टा वा[2] भवति यस्यां देवतायामार्थपत्यमिच्छता स्तुतिः प्रयुज्यते सा देवता तस्य मन्त्रस्य भवति'। छन्दोऽक्षर-संख्यावाच्छेदकमुच्यते । तावत्तत्रछन्दोऽनुक्रमणम्, गायत्र्युष्णिगनुष्टुब्बृहतीपंक्तिस्त्रिष्टुब्जगत्यतिजगतीशक्वर्यतिशक्वर्यष्टयत्यष्टि-धृत्यतिधृतिकृतिप्रकृत्याकृतिविकृतिसंकृत्यभिकृत्युत्कृत्येकविंशति छन्दांसीति । यत्र सर्वाणि छन्दांसीति वक्ष्यामस्तत्र गायत्र्यादि जगत्यन्तं सप्तछन्दांसि प्रकृतानि विजानीयात् । शंतातीयगणस्य शंतातिश्चन्द्रमाः सर्वाणि छन्दांसि । भैषज्यगणस्याथर्वा भैषज्या-

---

१. बी० में श्री गणेशाय नमः के आगे "अथर्वणनमः" है औरों में नहीं। ख. में इस स्थान पर "ओं नमो अथर्ववेदाय" है। ङ. में इस जगह पर "नमो ब्रह्मवेदाय" है। क. में "नमो ब्रह्मवेदाय", ब्रह्मवेदे भृगुरंगिरोक्तंबृहत्सर्वानुक्रमणिका लिख्यते । श्री गोपालरामचन्द्राभ्यांनमः ।

२. बी. मन्त्रदृष्ट्वा. क. ख. ग. घ. ङ च. मन्त्रदृष्टा वा। तुलना करो निरुक्त ७।१। "यत्कामऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते तद्दैवतः स मन्त्रो भवति" । तथा तुलना करो कात्यायन ऋक्सर्वानुक्रमणी । ३।२ । तथा देखो बृहद्देवता 'अर्थमिच्छन्नृषिर्देवं यं यमाहायमस्त्विति प्राधान्येन स्तुवन्भक्त्या मन्त्रस्तद्देव एव सः । १।६॥

युरतिजगत्यतिशक्वर्यौ सर्वाणिछन्दांसि च । रुद्रगणरौद्रगणयो-रथर्वा रुद्रोऽतिशक्वरीविराट्शक्वर्यष्टयः सर्वाणि छन्दांसि च । अथ दश गणाः । शान्तिगणस्य ब्रह्मा सोमोऽष्टिः संकृतिः सर्वा-णिछन्दांसि च । कृत्याप्रतिहरणगणस्य शुक्रः कृत्यादूषणोऽति-जगतोशक्वर्यौ सर्वाणिछन्दांसि ॥१॥

चातनगणस्य चातनऋषिरग्निर्देवता सर्वाणिछन्दांसि । मातृनामागणस्य मातृनामा ऋषिर्मातृनामा देवता, त्रिष्टुब्बृहत्य-नुष्टुब्जगत्युष्णिक्शक्वरी छन्दांसि । वास्तोष्पतिगणस्य ब्रह्मा ऋषिर्वास्तोष्पतिर्देवता शक्वर्यतिशक्वर्यौ सर्वाणि छन्दांसि च । पाप्महागणस्य ब्रह्माऋषिः पाप्महादेवता गायत्र्युष्णिगनुष्टुप्पं-क्तिर्जगती छन्दांसि । तक्मनाशनगणस्य भृग्वंगिराऋषिर्यक्ष्मना-शनोदेवता शक्वर्यष्टचत्यष्टिधृतयः सर्वाणि छन्दांसि च । दुःस्व-प्ननाशनगणस्य यमऋषिर्दुःस्वप्ननाशनोदेवता सर्वाणि छन्दांसि । आयुष्यगणस्य ब्रह्माऋषिरायुर्देवतातिजगतीशक्वर्यष्टचत्यष्टि-धृत्यतिधृति प्रकृतयश्चगायत्र्यादि सप्तछन्दांसि । वर्चस्यगणस्या-थर्वाऋषिर्बृहस्पतिर्देवता सर्वाणिछन्दांसि ॥२॥

अथ सप्तगणानां स्वस्त्ययनाभयापराजितशर्मवर्मादेवपुरी-यचित्रागणपात्नीवतानामथर्वाऋषिश्चन्द्रमादेवता, शक्वर्यतिश-क्वर्यौ सर्वाणिछन्दांसि च । आदित्यगणस्यब्रह्माऋषिरादित्यो देवतातिजगतीशक्वर्यष्टचतिछन्दांस्यायुष्यगणवत् । पांचपत्यग-णस्याथर्वाऋषिरग्निर्वायुःसूर्यश्चन्द्रापोदेवता, गायत्र्युष्णिगनुष्टु-ब्बृहतीपंक्तयश्चछन्दांसि । सलिलगणस्यब्रह्माऋषिरादित्यो देवतातिजगतीशक्वर्यष्टचत्यष्टिधृत्यतिधृतिकृतिप्रकृतयश्चगाय-त्र्यादि सप्तछन्दांसि । विश्वकर्मागणस्याथर्वा ऋषिर्वाचस्पति-र्देवतानुष्टुबुष्णिग्बृहतीपंक्तयश्चछन्दांसि । अर्थमुत्थापनगणस्या-

थर्वाऋषिरग्निर्देवतानुष्टुप्त्रिष्टुबुष्णिग्जगतीपंक्तिर्बृहत्यतिछन्दांसि । राज्याभिषेकगणस्य ब्रह्माऋषिर्मृत्युदेवताथर्वांगिरा, आपश्चंद्रमाउष्णिग्जगतीपंक्तिस्त्रिष्टुबनुष्टुब्बृहत्यश्च्छन्दांसि । अंहोलिंगगणस्याथर्वाऋषिरिन्द्राग्नी चन्द्रवरुणविश्वेदेवा देवताः सर्वाणि छन्दांसि ॥३॥

अथ सूक्तमन्त्राणां ऋषिदैवतछन्दांसि ।

कां० १ । सू० १ तत्र प्रथमं १ 'ये त्रिषप्ता' इति त्रीणि सूक्तान्यानुष्टुभान्येवाथर्वाऽपश्यत्पूर्वं वाचस्पत्यं, द्वितीयं चान्द्रमसं पार्जन्यम्, तृतीयं पर्जन्यमित्रादिबहुदेवत्यम् । पूर्वेण चतुर्ऋचेन वाचस्पतिमेवास्तौत्[1] वाचाभिवृद्धयै, द्वितीयेन चतुर्ऋचेनामृतमयं पर्जन्यं स्वदेवं चन्द्रमसं च । तृतीयेन नवर्चेन मन्त्रोक्तान्सर्वान्देवानिति । ४'उपहूतो वाचस्पतिरिति' चतुष्पदा विराडुरोबृहती ।

१।२।३ 'वृक्षंयदिति' त्रिपदाविराण्नामगायत्री ।

१।३।१ 'विद्माशरस्येति' तृतीयस्य नवर्चस्याद्याः पथ्यापंक्तयः । [2]'तत्रैकोनानिचृद्द्वय्रूनाविराडेकाधिकाभुरिक् द्वयधिका स्वराडिति । संदिग्धे देवतादित' इति सर्वत्र परिभाष्यते । पराश्चतस्रः [3]प्रथमः प्रतीकत्वेनानुष्टुभइत्येवं सर्वत्र वक्ष्यमाणेषु मन्त्रेषु प्रथम [4]प्रतीकिका प्रकृतिरिति ॥४॥

---

१. ख. वाचाविवृद्धयै ।

२. तु० क० पिङ्गलछन्दः सूत्रम् अध्या० ३ । ऊनाधिकेनैकेन निचृद्भुरिजौ ॥५९॥ द्वाभ्यां विराट्स्वराजौ ॥६०॥ आदितः संदिग्धे ॥६१॥ देवतादितश्च ॥६२॥

३. गु० प्रातीकल्पेन ।

४. ग० च० प्रतीका ।

[1]१।४।–१ 'अम्बयोयन्तीति' त्रीणि सूक्तान्यपोनप्त्रीयाणि गायत्राणि सोमाद्बैवतानि सिन्धुद्वीपोऽपश्यदंत्यमथर्वा, कृतिः स्वस्थानत्वेनैतैः सूक्तैरप एवास्तौत् । ४'तत्राप्स्वन्तरिति' पुरस्ताद्बृहती ॥

१।६।४ 'शं न आप' इति पथ्यापंक्तिः ॥

१।७।१। 'स्तुवानम्' इति ।

१।८।१ 'इदंहविरिति' चैतत्सूक्तद्वचमानुष्टुभं चातनोऽपश्यत् । प्रथमेन सप्तर्चेन स्तुवानं यातुधानमग्निमाह्वयत्ततोग्निः सर्वाभि ऋग्भिरस्तौत् । 'इदंहविरिति' द्वाभ्यामृग्भ्यां बृहस्पतिमिग्नीषोमौ चाप्रार्थयत् । पराभ्यामग्नि ७।५ 'पश्यामते' इति त्रिष्टुप् । ७।३ 'अथेदमग्ने' इत्यग्निमिन्द्रप्रार्थना च । ८।४ । 'यत्रैषामग्ने' इति बार्हतगर्भात्रिष्टुबिति ॥५॥

१।९।१ 'अस्मिन् वस्विति' सूक्तं त्रिष्टुभं वस्वादिनाना मन्त्रोक्त देवत्यमथर्वापश्यत्तत्र प्रथमा द्वितीये बहुदेवत्ये । परे द्वे आग्नेय्यौतत आभिर्मन्त्रोक्तान्देवानग्निपुरोगमान्सर्वानप्रार्थयच्चतसृभिर्वस्वादिसर्वमिष्टं च ॥

१।१०।१ ततो 'अयंदेवानामिति' सूक्तमासुरं वारुणं त्रैष्टुभं । पूर्वयासुरमस्तौत्पराभिर्वरुणमानुष्टुभावंत्ये द्वे । ३'यंदुवंक्थेति' ककुम्मती ॥

१।११।१ 'वषट् ते पूषन्निति' सूक्तं पौष्णं षडर्चं पांक्तमनेन मन्त्रोक्तानर्यमादि देवान्नारीसुखप्रसवायाभिष्टूयेष्टञ्च सर्वाभि-

---

१. इस १।४। सूक्त के १–३ मन्त्रों का ऋ० वे० में १।२३।१६–१९ में मेधातिथि: काण्व ऋषि है ।

अथर्व० १।५। सूक्त तथा १।६। के २, ३ मन्त्र ऋ० वे० १०।९। सूक्त में आये हैं वहां इन मन्त्रों का द्रष्टा त्रिशिरास्त्वाष्ट्रः वा सिन्धुद्वीप वा आम्बरीष ऋषि हैं ।

रप्रार्थयत् । २'चतस्रो दिवः' इत्यनुष्टुप्परा चतुष्पदोष्णिग्गर्भा ककुम्मत्यनुष्टुप् । ४'नेव मांसे' इति तिस्रः पथ्यापंक्तय इत्यनयोः प्रागुक्तर्षिरिति ॥६॥

१।१२॥१ 'जरायुजः' इति सूक्तं यक्ष्मनाशन देवताकं जागतं भृग्वंगिरा । द्वितीयान्त्यनुष्टुप् ॥

१।१३।१ 'नमस्ते अस्तु' ॥

१।१४।१ 'भगमस्या' इति सूक्ते वैद्युते द्वे आनुष्टुभे । प्रथमं वैद्युतं परं वारुणं वोत याम्यं वा । प्रथमेन विद्युतमस्तौत्, द्वितीयेन तदर्थं यममिति । १४।१ 'भगमस्या' इति ककुम्मती । १३।३ 'प्रवतो नपादिति' चतुष्पाद्विराड्जगती । १३।४ 'यां त्वा देवा' इति त्रिष्टुप्पराबृहती गर्भा पंक्तिः । १४।३ 'एषा ते कुलपा' इति चातुष्पाद्विराड् ॥

१।१५।१ 'सं सं स्रवन्त्विति' सूक्तमानुष्टुभंसैंधवमथर्वापश्यत्ततोऽनेन मन्त्रोक्तान्देवानप्रार्थयदाद्या, द्वितीया भुरिक् पथ्यापंक्तिरिति ॥७॥

१।१६॥१ 'येऽमावास्यामिति' सूक्तमग्नीन्द्रं वारुणं दधत्यमानुष्टुभं चातनोऽद्राक्षीदनेन मन्त्रोक्तान्देवान् सीसमभिष्टूयाप्रार्थयत् । ४'यदि नोगामिति' ककुम्मती शेषं प्राकृतम् ॥

१।१७॥१ 'अमूर्या' इति सूक्तं योषिद्देवत्यमानुष्टुभं । ब्रह्मा लोहितवाससो मन्त्रोक्तदेवता अस्तौत् । आद्या भुरिक् । ४'परि वः सिकतावतीति' त्रिपदार्षीगायत्री ॥

१।१८॥१ 'निर्लक्ष्म्यमिति' सूक्तं वैनायकमानुष्टुभं द्रविणोदाः । प्रथमोपरिष्टाद्विराड्बृहती । २'निररणिमिति' निचृज्जगती । ३'यत्त आत्मनीति' विराडास्तारपंक्तिस्त्रैष्टुभमिति ॥८॥

१।११९।१ 'मानो विदन्निति' सूक्तमैश्वर्यमानुष्टुभम् । ब्रह्मा प्रथमैन्द्री, द्वितीया [1]'मानुष्येष्ठवीदैवीस्तृतीयारौद्रीया । 'यद्देवत्या तया तामेवास्तौदिति' वैश्वदेवत्या । २'विष्वञ्चो अस्मच्छरवः' इति पुरस्ताद्बृहती । ३'यो नः स्वो' इति पथ्यापंक्तिः ॥

१।१२०[2] ।१ 'अदारसृदिति' सूक्तं सौम्यमानुष्टुभमथर्वा, प्रथमात्रिष्टुप् सौम्या । द्वितीया मारुतः । तृतोया मैत्रावारुणी । परा वारुणी । परैन्द्री ॥

१।१२१[3] ।१ 'स्वस्तिदा विशामिति' सूक्तमैन्द्रमानुष्टुभमनेनेन्द्रप्रार्थनां प्रागुक्तर्षिरकरोत् ॥

१।१२२[4] ।१ 'अनुसूर्यमिति' सूक्तं सौर्यमुत मन्त्रोक्तं । हरिमादेवत्यमानुष्टुभं । ब्रह्मा ततोऽनेन सूर्य्यं, हरिमाणं, हृद्रोगं चास्तौदनाशयम् ॥

१।१२३।१ 'नक्तं जातेति' सूक्तं वानस्पत्यमानुष्टभमथर्वा श्वेतलक्ष्मविनाशनायानेनासिक्नीमोषधिमस्तौदिति ॥६॥

१।१२४।१ 'सुपर्णो जात' इति सूक्तमासुरी वनस्पतिदेवत्यमानुष्टुभं । ब्रह्मासुरीमनेनास्तौदिति । २'आसुरी चक्र' इति निचृत्पथ्यापंक्तिः ॥

---

१. सब मूल पुस्तकों में इस पाठ पढ़ने में शंका बनी रही है। मूल अ० वेद १।११९।२ में "दैवीर्मनुष्येषवः" पाठ है। हमने जो शुद्ध पाठ (ङ) मूल पुस्तकाधार से जाना है, वह दिया है।

२. इस १।२०। सूक्त का चतुर्थ मन्त्र ऋ० वे० १०।१५२।१ में आता है, वहां इसका ऋषि शासोभारद्वाजः, देवता इन्द्र और छन्द निचृदनुष्टुप् है।

३. १।२१। इस सूक्त के चारों मन्त्र ऋ० वे० १०।१५२ सूक्त में आते हैं। स्वस्तिदा मन्त्र का ऋ० वे० में थोड़ा सा भेद है। ऋ० वे०।। में इस सूक्त का द्रष्टा शासो भारद्वाजः ऋषि है।

४. २२॥४ मन्त्र का ऋ० १।५०।१२ में बहुत थोड़े भेद से आता है, वहां इस का ऋषि प्रस्कण्वः काण्वः है।

१।२५।१ 'यदग्निरिति' सूक्तं यक्ष्मनाशनाग्निदैवतं त्रैष्टुभं भृग्वंगिरामन्त्रोक्तदेवानस्तौत्। द्वितीया तृतीये विराड्गर्भे। ४'नमः शीतायेति' पुरोऽनुष्टुबिति ॥

१।२६।१ 'आरे साविति' सूक्तमिन्द्रादि बहुदेवत्यं गायत्रं। ब्रह्मा मन्त्रोक्तान्देवानभिष्टूयाप्रार्थयत्। २'सखासाविति' त्रिपदा साम्नीत्रिष्टप्। ४'सुषूदतेति' पादनिचृदुभे एकावसाने ॥

१।२७।१ 'अमूः पार' इति सूक्तं चान्द्रमसमुतेन्द्राणी दैवतमानुष्टभं। स्वस्त्ययनकामोऽथर्वा। प्रथमा पथ्यापंक्तिः ॥

१।२८।१ 'उप प्रागाद्देव' इति सूक्तमाग्नेयमानुष्टुभम्। चातनः सार्द्धाद्ययाग्निमस्तौत्। [1]साधर्भ्यांपरामृग्भ्यां यातुधानीश्चेति। ३ 'या शशापेति' विराट्पथ्याबृहती। ४'पुत्रमत्त्विति' पथ्यापंक्तिरिति ॥१०॥

१।२९।१ [2]'अभीवर्तेनेत्य' भीवर्तमणि सूक्तं षडर्चं ब्राह्मणस्पत्यमानुष्टुभं। वसिष्ठोऽनेन सूक्तेनेमं मणि सपत्नक्षयणाय, चन्द्रमसो ब्राह्मणस्पत्यमभिष्टूयाप्रार्थयत् ॥

१।३०।१ 'विश्वेदेवाः' इति सूक्तं वैश्वदेवं त्रैष्टुभमायुष्कामोऽथर्वा सर्वान् वस्वादिदेवान् सर्वाभिर्ऋग्भिरस्तौत्। ३'ये देवाः' इति शाक्वरगर्भाविराड्जगती ॥

१।३१।१ 'आशानामाशापालेभ्यः' इति सूक्तमाशा [3]पालीयं, वास्तोष्पत्यमानुष्टुभम्। ब्रह्मानेनाशापालान्वास्तोष्पतीन् सूक्ते-

---

१. यह पाठ किसी भी हस्तलेख में भली प्रकार से नहीं पढ़ा जाता तथापि ह० ले० के आधार से ही उपर्युक्त पाठ की कल्पना की गई है।

२. इस सूक्त के आदि के तीन मन्त्र अत्यन्त थोड़े भेद से ऋ० १०।१७४ में आते हैं वहां ऋषि अभीवर्त्तः और देवता राज्ञः स्तुतिः है।

३. ख. ग. ङ. च. लीये ॥

नास्तौत् ३'अस्रामस्त्वा' इति विराट्त्रिष्टुप् । ४'स्वस्ति मात्रे' इति परानुष्टुप्त्रिष्टुबिति ॥११॥

१।३२।१ 'इदंजनासः' इति ब्रह्मसूक्तं द्यावापृथिवीयमानुष्टुभमनेन तदेवास्तौदिति । [1]सर्वत्रानुक्तर्षिसूक्तेषु प्रागुक्तर्षिरिति विजानीयादनुक्त [2]क्रियेष्वपश्यात्तन इति च सर्वत्र परिभाष्यते । या [3]यद्देवत्या तया तामेवास्तौदिति पारिभाषिकं सूक्तमिति च [4]सर्वत्रावगच्छेदिति शास्त्रप्रकृतिराग्रन्थपरिसमाप्तेः । २ 'अन्तरिक्ष आसाम्' इति ककुम्मतीति ॥

१।३३।१ 'हिरण्य वर्णाः' इति सूक्तं चान्द्रमसमाप्यमुत त्रैष्टुभं । शंतातिः सर्वेण सूक्तेन सर्वकारणं आप एवेति विज्ञाय ता [5]अस्तौदिति ॥

१।३४।१ 'इयं वीरुत्' इति [6]मधुकमणिसूक्तं पञ्चर्चं वानस्पत्यमानुष्टुभमथर्वा मधुवनस्पतिमस्तौत् ॥

१।३५।१ 'यदाबध्नन्' इति हैरण्यमैन्द्राग्नमुत वैश्वदेवं जागतं ततोऽनेन सूक्तेन हिरण्यमेवास्तौत् । यच्छतानीकाय राज्ञे

---

१. अनुक्त ऋषि ।

२. ख. क्रियेष्वपश्यत्तत, च. क्रियेष्वपस्थातन ।

३. बी. या यद्दचावत्या ।

४ बी. सर्वत्र नहीं ।

५. समग्र, ह० लेखों में 'विज्ञातास्तौत्' पाठ है परन्तु हमारी सम्मति में यह पाठ अशुद्ध लिखे हुए हैं, शुद्ध करके व्याकरण के नियम से पाठ हमने मूल में दिया है ।

६. बी. क. ग. गु. मदुघ, ख. ङ. च. मधुघ. हमने दोनों ही पाठ नहीं दिये, कौशि. १।३४ में इसी सूक्त पर सूत्र लिखते हुए 'मधुक मणिमीक्षेऽपनीय इयं वीरुत्' पाठ में 'मधुकमणिं' आया है, यही ठीक जान मूल में दिया है ।

दक्षर्षेः पुत्रा अबध्नँस्तत्र आत्मनि बध्नाम्यायुष्कामः । ४ 'विश्वे-देवाः' इति ४ 'समानां मासाम्' इत्यनुष्टुब्गर्भा चतुष्पदात्रिष्टुप् 'तत्ते' बध्नाम्यायुषे १वर्चसेबलाय' इति शाक्वरस्तथा ३[3] 'अस्मि-न्तद्दक्षमाणः' इति ॥१२॥



२. यह प्रतीक इस सूक्त में किसी मन्त्रारम्भ की नहीं, हां चतुर्थ मन्त्र के उत्तरार्ध में यह पद आया है।

३. यह प्रतीक भी प्रथम मन्त्र के उत्तरार्ध के आरम्भ की है।

४. यह भी प्रतीक नहीं, परन्तु तृतीय मन्त्र के उत्तरार्ध में यह पाठ आया है। मूल में इस सूक्त में 'समानामासामिति' इस प्रतीक के विना अन्य सब प्रतीक आरम्भ की नहीं हैं, यह भी बात यहां चिन्तनीय ही है।

 

# [†]अथ द्वितीयं काण्डम्

२।१।१ 'वेनस्तत्' इति प्रभृतिराकाण्डपरिसमाप्तेः पूर्वकाण्डस्य चतुरृचप्रकृतिरित्येवमुत्तरोत्तरकाण्डेषु षष्ठं यावदेकैका तावत्सूक्तेष्वृगिति विजानीयात्। १ 'वेनस्तत्' इति त्रैष्टुभं ब्रह्मात्मदैवतं वेनोऽपश्यत्। ततोऽनेन सूक्तेन तदेवास्तौदिति। [१]३ 'स नः पिता' इति जगती ॥

२।२।१ 'दिव्यो गन्धर्वः' इति त्रैष्टुभं। मातृनामा गन्धर्वाप्सरो देवत्यं मातृनामानेन सूक्तेन मन्त्रोक्तान् गन्धर्वाप्सरसो देवता अस्तौत्। ४'अभ्रिये दिद्युत्' इति त्रिपाद्विराण्नाम गायत्री। १'दिव्यो गन्धर्वः' इति विराड्जगती। ५'याः क्लन्दाः' इति भुरिगनुष्टुबिति ॥१३॥

२।३।१ 'अदो यत्' इति भैषज्यायुर्धन्वंतरिदैवतं षडर्चमानुष्टुभमंगिरा अपश्यदनेन मन्त्रोक्तान् देवानस्तौत्। ६ 'शं नो भवन्तु' इति त्रिपात्स्वराडुपरिष्टान्महाबृहतीति ॥

२।४।१ 'दीर्घायुत्वाय' इति चान्द्रमसमुतजंगिडदेवताकमानुष्टुभं षडर्चमथर्वानेन सूक्तेन जंगिडमणिमस्तौदिति। प्रथमा विराट्प्रस्तारपंक्तिरिति ॥

२।५।१ [२]'इन्द्र जुषस्व' इति सप्तर्चं त्रैष्टुभमैन्द्रं भृगुरथर्वाण इन्द्रमनेन सूक्तेनाह्वयदाद्यया पराभिश्च सर्वाभिस्तमस्तौदिति।

---

†. यह पाठ हमारा है।

१. थोड़े भेद से यह मन्त्र ऋ० वे० १०।८२।३ में आया है वहां ऋषि विश्वकर्मा भौवनः है।

२. इस २।५ सूक्त के ५–७ मन्त्र ऋ० वे० १।३२।१-३ में आते हैं वहां इन का ऋषि हिरण्यस्तूप आङ्गिरस है।

[1]य उपरिष्टाद्बृहत्यौ तत्र प्रथमा निचृदुत्तरा विराडिति । ३ 'इन्द्रस्तुराषाट्' इति विराट्पथ्याबृहती । ४ 'आ त्वा विशन्तु सुतासः' इति जगती पुरोविराडिति ॥१४॥

२।६।१ 'समास्त्वाग्ने' इत्याग्नेयं त्रैष्टुभंसम्पत्कामः शौनकोऽनेन सूक्तेनाग्निमस्तौदिति । ४ 'क्षत्रेणाग्ने स्वेन' इति चतुष्पदार्षीपंक्तिः परा, विराट्प्रस्तारपंक्तिरिति ॥

२।७।१ 'अघ द्विष्टा' इति भैषज्यायुर्वनस्पतिदेवत्यमानुष्टुभमथर्वा प्रथममनेन सूक्तेन दूर्वामस्तौदिति । प्रथमा भुरिक् । ४'परि मां परि मे' इति विराडुपरिष्टाद्बृहती ॥

२।८।१ 'उदगातां' ॥

२।९।१ 'दशवृक्ष' इति च द्वे इमे सूक्ते वानस्पत्ये यक्ष्मनाशन देवते चानुष्टुभे भृग्वंगिरा आभ्यां मन्त्रोक्तदेवते अस्तौत् । २।८।३ 'बभ्रोरर्जुन काण्डस्य' इति पथ्यापंक्तिः, परा विराट्, परा निचृत्पथ्यापंक्तिः । १ 'दशवृक्ष मुञ्च' इति विराट्प्रस्तारपंक्तिरिति ॥१५॥

२।१०।१ 'क्षेत्रियात् त्वा' इति सूक्तं प्रागुक्तर्षिगणं निर्ऋतिद्यावापृथिव्यादिनाना देवत्यमष्टर्चं । प्रथमा त्रिष्टुप् तया निर्ऋतिमस्तौद्ब्रह्मणा सह सर्वाभिर्द्यावापृथिवी । द्वितीययाग्निमद्भिः सह पूर्वपादेनोत्तरेण सहौषधीभिः सोमम् । तृतीयया पूर्वपादेन वातमुत्तरेण चतस्रो दिशः । पराभिर्वातपत्नीः, सूर्ययक्ष्मम्, निर्ऋतिप्रभृतीनिचेति । २ 'शं ते अग्निः' इति सप्तपादष्टिः । ३'शं ते वातः', ४ 'इमा या देवीः', ५ 'तासु त्वा', ८ 'सूर्यमृतं', ७ 'अहा अरातिम्' इति, प्रत्यृचं सप्तपादो धृतयः । ६ 'अमुक्था

१. ठीक पाठ पढ़ा नहीं जाता क: गु. में 'त्यं त्ये' पाठ है ।

यक्ष्मात्' इति सप्तपादत्यष्टिः । [1]८ 'एवाहं त्वाम्' इति द्वावौष्णिहौ पादाविति ॥१६॥

२।११।१ 'दूष्या दूषिरसि' इति कृत्यापरिहरण सूक्तं कृत्यादूषण देवत्यं । शुक्रोऽनेन स्राक्त्यमणिमेव सर्वरूपमित्यस्तौत् । प्रथमा चतुष्पदा विराड् गायत्री । २ 'स्राक्त्योऽसि' इति चतस्रस्त्रिपदाः परोष्णिहः । ४ 'सूरिरसि' इति पिपीलिकमध्या निचृदिति ॥१७॥

२।१२।१ [2]'द्यावापृथिवी उरू' इति सूक्तमष्टर्चं नाना देवत्यं । त्रैष्टुभ भरद्वाजः प्रथमया द्यावापृथिवी अन्तरिक्षमुरूगायमस्तौत् । द्वितीयया देवान्, परयेन्द्रं, परयादित्यवस्वंगिरः पितृन् सौम्यान्, परया ब्रह्मविराट्तपोऽघ्न्यो मरुतः, परया यमसदनात्, परया ब्रह्मा, परयाग्निमिति । तत्र २'इदं देवाः' इति जगती । ७ 'सप्त प्राणान्' इति द्वे अनुष्टुभौ । शेषः प्रतीक इति ॥१८॥

२।१३।१ 'आयुर्दा' इति बहुदेवत्यमुताग्नेयम् । त्रैष्टुभमथर्वाद्ययाग्निमस्तौत् । पराभ्यांबृहस्पतिं [3]चन्द्रमसे वासः प्रार्थयत् । पराभ्यामायुर्विश्वान्देवान् । ४ 'एह्यश्मानम्' इत्यनुष्टुप् । ५ 'यस्य ते वासः' इति विराड्जगती ॥

२।१४।१ 'निस्सालाम्' इति षडर्चमानुष्टुभम् । शालाग्निदेवत्यमुत मन्त्रोक्तदेवताकं चातनः सर्वाभिर्ऋग्भिर्मन्त्रोक्तान् देवान् अग्निभूतपतीन्द्रानस्तौत् । २ 'निर्वः' इति भुरिक् । ४ 'भूतपतिः' इत्युपरिष्टाद्विराड्बृहतीति ॥१६॥

---

१. गु. में यहां यह अधिक पाठ है जो कि अन्यों में २।१२ के आरम्भ में है। 'स द्यावा पृथिवी उर्वीतिस्तत्कमष्टर्चं नाना देवत्यं त्रैष्टुभं भरद्वाजः प्रथमया सर्पदित्यष्टिः' ।

२. इस सूक्त का छठा मन्त्र थोड़े से भेद से ऋ० वे० ६।५२।२ में है।

३. बी चन्द्रसो. क. चन्द्रमासा।

२।१५।१ 'यथाद्यौः' ॥

२।१६।१ 'प्राणापानौ' ॥

२।१७।१ 'ओजोसि' इति त्रीणि प्राणापानायुर्देवत्यानि नानाछन्दांसि । ब्रह्मा प्रथमं षडर्चं त्रिपाद्गायत्रं तेन प्राणमप्रार्थयत् । परे द्वे एकावसाने । तत्र द्वितीयं सप्तर्चं तस्याद्याः षडेकपदा आसुरी त्रिष्टुभोऽन्त्यासुर्युष्णिक् पृथक् प्रथमेन प्रत्यृचं मन्त्रोक्तान्देवान् स्वायुरेवाप्रार्थयत् । परेणौजः प्रभृतीनि प्राणायुश्च । १६।१ 'प्राणापानौ' इत्येकपदासुरी त्रिष्टुप्[1] । द्वितीयैकपदासुर्युष्णिक् । पराचैकपदासुरी त्रिष्टुप् । ४'अग्ने वैश्वानर' इति[2] [द्वे] द्विपदे आसुरी गायत्र्यावाद्याद्य [3]ऋतुवर्णः पराद्यो वसुवर्ण इति ॥

२।१८। 'भ्रातृव्यक्षयणम्' इत्याग्नेयं द्वैपदं साम्नाबार्हतम् चातनः सपत्नक्षयकामोऽनेन सूक्तेन सपत्नक्षयणीः समिध आधायाग्नि प्रार्थनीयमप्रार्थयच्चेति ॥२०॥

२।१९।१ 'अग्नेयत्' इति पंचसूक्तानि त्रिपाद्गायत्राणि । प्रतिसूक्तं पंच पंचर्चान्येकावसानानि [4]पांचपत्यान्यथर्वा । प्रथममाग्नेयं, द्वितीयंवायव्यं, तृतीयंसौर्यं च, तुरीयंचान्द्रं, पञ्चममाप्यमिति । प्रथमेनाग्निमस्तौत् द्वितीयेन वायुं, तृतीयेनसूर्यं, चतुर्थेन चान्द्रमसं, पञ्चमेनाप इति । तत्राद्यानां चतुर्णामाद्याश्चतस्रो निचृद्विषमा गायत्र्योऽन्त्या भुरिग्विषमा । पञ्चमस्याद्याश्चतस्रः समविषमा अन्त्यास्वराड्विषमा । सर्वा एव संगताः पंच विंशतिस्त्रिपाद इति ॥

---

१. मूल ग्रन्थ 'भः'।

२. मूल ग्रन्थों में (द्वे) नहीं बन्धनी में स्वयं दिया है।

३. यह पाठ ठीक नहीं पढ़ा जाता ऋ और क. में संशय था हमने ऋ पाठ दिया है।

४. ह्विं० कौशिक सूत्र ४७।८ के आधार से 'पंचापत्यानि' पाठ मानता है।

२।२४।१ 'शेरभक' अष्टर्चमायुष्यं पांक्तम् । ब्रह्मा सर्वाभिः प्रत्यृचं मन्त्रोक्तदेवतामृग्भिरस्तौदिति । प्रथमे द्वे पुरउष्णिहे, परे द्वे पुरो देवत्ये पांक्ते, सर्वा एताश्चतस्रो वैराजः । पराः पंचपदाः पथ्यापंक्तयोऽत्राद्ये भुरिजावुत्तरे निचृदाविति । ५'जूर्णि' इति चतुष्पदा बृहत्यः प्रथमा वर्जं तिस्रो भुरिज इति ॥२१॥

२।२५।१ 'शं नः' इति वानस्पत्यमानुष्टुभम् चातनोऽनेन पृश्निपर्णीमोषधीमस्तौत् । ४'गिरिमेनां' इति भुरिक् ॥

२।२६।१ 'एह यन्तु' इति पशव्यं त्रैष्टुभं सवितानेन पशून्भ्यस्तौदिति । ३'सं सं स्रवन्तु' इति उपरिष्टाद्विराड्बृहती । ४'सं सिञ्चामि' इति द्वे अनुष्टुभौ । पूर्वा तत्र भुरिक् ॥

२।२७।१ 'नेच्छत्रुः' इति सप्तर्चं वानस्पत्यमानुष्टुभम् कपिञ्जलः प्रथमयारिनिरोजस्त्वमप्रार्थयन्मन्त्रोक्तमौषधिं, पराभिश्चतसृभिश्चौषधिमस्तौत् । परया रौद्रचा रुद्रं, परयैन्द्रमिति ॥

२।२८।१ 'तुभ्यमेव' इति त्रैष्टुभम् । जरिमायुर्दैवतं । शंभू प्रथमया जरिमाणमभिष्टूयाप्रार्थयदायुश्च । द्वितीयया मित्रावरुणौ, परया पुनर्जरिमाणं । पराभिर्द्यावापृथिव्यादिदेवानायुश्च । प्रथमा जगत्यंत्याभुरिगिति ॥२२॥

२।२९।१ 'पार्थिवस्य' इति सप्तर्चं त्रैष्टुभं बहुदेवत्यम् अथर्वा प्रथमा वैश्वदेवी, तया देवानायुष्यमात्मनेऽप्रार्थयत् द्वितीयायाः प्रथमेनायुर्जातवेदसं, परेण पादेन प्रजां त्वष्टारं, तृतीयेन सवितारं धनं शतायुश्च, परयेन्द्रं सौप्रजास्त्वादि, पराभ्यां द्यावापृथिव्यौ विश्वान्देवान् मरुतश्चापश्च, परयाश्विनौ, परयेन्द्रमस्तौदिति च शिष्यते । प्रथमानुष्टुप् । ४ 'इन्द्रेण दत्तः' इति पराबृहतीनिचृत्प्रस्तारपंक्तिः ॥

२।३०।१ 'यथेदम्' इति प्रजापतिराश्विनमानुष्टुभं कामिनी मनोऽभिमुखीकरणकामः प्रथमया भूतृणं दृष्टान्तेन मनोमंथनमादध्यात् । परयाश्विनौ, पराभिस्तदर्थमोषधिमस्तौदंतयया दम्पती परस्परंमनोग्रहणमाकुरुताम् ॥

२।३१।१ 'इन्द्रस्य या' इति महीदेवत्यमुत चान्द्रमसमानुष्टुभं काण्वः । प्रथमया महीमस्तुवत्, पराभिः सर्वाभिश्च कृमिजम्भनमादध्यादिति । २'दृष्टमदृष्टम्' इत्युपरिष्टाद्विराड्बृहती । परार्षी त्रिष्टुप् । ४ 'अन्वान्त्र्यम्' इति प्रागुक्ता बृहती । ५ 'ये क्रिमयः' इति प्रागुक्ता त्रिष्टुप् ।

२।३२।१ 'उद्यन्नादित्यः' इत्यादित्यदेवत्यं षड्चमानुष्टुभमनेनोक्तऋषिरुक्तक्रियामकरोदिति । प्रथमा त्रिपाद्भुरिग्गायत्री । ६ 'प्र ते शृणामि शृंगे' इति चतुष्पान्निचृदुष्णिगिति ॥२४॥

२।३३।१' [1]'अक्षीभ्याम् ते' इति यक्ष्मविबर्हणं सप्तर्चं चान्द्रमसमायुष्यमानुष्टुभम् । ब्रह्मानेन सर्वेण सूक्तेन सर्वांगतो यक्ष्मनिर्गमनमादध्यात् । ५ 'ऊरुभ्यां ते' इत्युपरिष्टाद्विराड्बृहती । ३ 'हृदयात्ते' इति ककुम्मती । ४ 'आन्त्रेभ्यः' इति चतुष्पाद्भुरिगुष्णिक् । ६ 'अस्थिभ्यः' इत्युष्णिग्गर्भा निचृदनुष्टुप् । ७ 'अङ्गे अङ्गे' इति पथ्यापंक्तिः ॥

२।३४।१ 'य ईशे' इति पाशुपत्यं पशुभागकरणं त्रैष्टुभमथर्वा । प्रथमया पशुपतिमभिष्टूय परा [2]पश्वाप्रार्थयदंततो द्विती-

---

१. इस २।३३ सूक्त के १,२,४,५,७ मन्त्र ऋ० वे० १०।१६३ सूक्त में आते हैं। १, २, ५, मन्त्र तो वैसे के वैसे ही हैं, अन्य ४, ७ मन्त्र कुछ भेद से आये हैं। वहां इन मन्त्रों का ऋषि 'विवृहा काश्यपः' है।

२. यह पाठ सब मूल लेखों में पढ़ना कठिन है। घ. ङ. में "परायश्च" पढ़ा जाता है। अन्यों में जो पाठ ऊपर दिया है वैसा ही पढ़ा जाता है।

यया देवान्, परयाग्निं विश्वकर्म्माणम्, परया वायुं प्रजापतिमं-त्यया यज्ञियं पशुमाशिषा प्राणुदत् ॥

२।३५।१ 'ये भक्षयन्तः' इति वैश्वकर्माणं त्रैष्टुभमंगिरा सर्वेणानेन सूक्तेन तं विश्वकर्माणमेवास्तौत् । प्रथमा बृहतीगर्भा । ४'घोरा ऋषयः', ५'यज्ञस्य चक्षुः' इति भुरिजौ ॥

२।३६।१ 'आ नो अग्ने' इत्यष्टर्चमग्नीषोमीयं त्रैष्टुभं पतिवेदनः प्रथमयाग्निमस्तौत् द्वितीयया सोमादीन् देवान्, परयाग्नीषोमौ, परया त्विन्द्रम्, परया सूर्यम्, परया धनपतिम्, परया हिरण्यादिभगं चांत्ययौषधिमप्रार्थयदिति । प्रथमा भुरिक् । २'सोमजुष्टं' ५ 'भगस्य नावम्' इति तिस्रोऽनुष्टुभोऽन्त्या निचृत्पुरउष्णिगिति ॥२५॥

[1]इति ब्रह्मवेदोक्तमन्त्राणां बृहत्सर्वानुक्रमणिकायां प्रथमः पटलः समाप्तः ॥



१. गु. इत्यथर्ववेदे अनुक्रमणिकायां प्रथमः पटलः समाप्तः सम्वत् १९२२ ना कार्त्तिक वदि १३ । ङ. इति ब्रह्मवेदोक्त अनुक्रमणीकायां प्रथमः पटलः ।

# ‡अथ तृतीयं काण्डम्

३।१।१ 'अग्निर्नः' इति द्वे सेनामोहने बहुदेवत्ये त्रैष्टुभेऽथर्वात्र [1]षड्ढचं प्रकृतिरन्याविकृतिरिति विजानीयात् । प्रथमयाग्निमस्तौत् । द्वितीयया [2]मरुतः, पराभिरिन्द्रम्, परस्य प्रथमाभ्यामग्निम्, पराभ्यामिन्द्रम्, परया द्याम्, परया मरुत इति पूर्वस्य तृतीयान्त्ये ॥

३।२।२ 'अयमग्निरमूमुहत्' इति तिस्रोऽनुष्टुभः । ३।१।५ 'इन्द्र सेनाम्' इति विराट्पुरउष्णिक् । ३।१।२ 'यूयमुग्रा' इति विराड्गर्भा भुरिक् ॥

३।३।१ 'अचिक्रदत्' इति नाना देवत्यमुताग्नेयं त्रैष्टुभमनेन मन्त्रोक्तान्देवानस्तौत् । ३'अद्भ्यस्त्वा राजा' इति चतुष्पदा भुरिक्पंक्तिः । ५ 'ह्वयन्तु' इति द्वे आनुष्टुभे ॥

३।४।१ 'आ त्वा गन्', ५।१ 'आयमगन्' इति द्वे सूक्ते, आद्यं सप्तकं द्वितीयमष्टकम् । पूर्वमैन्द्रमुत्तरं सौम्यम् । पूर्वेणेन्द्रमुत्तरेण पर्णमणिमुक्तर्षिरस्तौदिति । ४।४ 'अश्विना त्वा', ४।५ 'आ प्र द्रव' इति द्वे भुरिजौ । ४।१ 'आ त्वा गन्' इति जगती ॥

३।५।२ 'मयि क्षत्रम्' इति द्वे । ५ 'आ मारुक्षत्' इति तिस्रोऽनुष्टुभः । १ 'आयमगन्' इति पुरोऽनुष्टुप्त्रिष्टुप् । ८ 'पर्णोसि' इति विराडुरोबृहतीति ॥१॥

३।६।१ 'पुमान् पुंसः परिजातः' इत्यष्टर्चं वानस्पत्याश्वत्थदेवत्यमानुष्टुभं जगद्बीजं पुरुषोऽनेन सूक्तेनारिक्षयायामुं मन्त्रोक्तं देवमश्वत्थमेवास्तौदिति ॥

---

‡ यह लेख हमारा है ।

१, मू० ले० षडर्चम् । २. मूल लेखों में विसर्ग नहीं हैं ।

३।७।१ 'हरिणस्य' इति सप्तर्चं यक्ष्मनाशनदैवतमुत बहुदेवत्यमानुष्टुभम्, भृग्वंगिरा आद्याभिस्तिसृभिर्हरिणमस्तौत् । परया तारके, परयापः, पराभ्यां यक्ष्मनाशनम् । ६ 'यदासुतेः' इति भुरिक् ॥

३।८।१ 'आयातु मित्रः' इति मैत्रमुत वैश्वदेवं त्रैष्टुभम् । अथर्वा चतसृभिर्मित्रादीन् विश्वान्देवानस्तौत् । पराभ्यां सांमनस्यमिति । २ 'धाता रातिः', ६ 'अहं गृभ्णामि' इति जगत्यौ । ५ 'सं वो मनांसि' इत्यनुष्टुप् । ४ 'इहेदसाथ' इति विराड्बृहतीगर्भाचतुष्पादिति ॥२॥

३।९।१ 'कर्शफस्य' इति द्यावापृथिवीयमुत वैश्वदेवमानुष्टुभं वामदेवः । ४ 'येना श्रवस्यवः' इति चतुष्पान्निचृद्बृहती । अन्त्या भुरिक् ॥

३।१०।१[1] 'प्रथमा ह' इति त्रयोदशर्चमाष्टक्यमानुष्टुभमथर्वा सर्वाभिरेकामेवाष्टकामस्तौत् । ४ 'इयमेव सा या' इति तिस्रः । १२ 'एकाष्टका' इति त्रिष्टुभः । ७ 'आ मा पुष्टे च' इति त्र्यवसाना षट्पदा विराड्गर्भाति जगती ॥

३।११।[2] १ 'मुञ्चामि त्वा' इत्यष्टर्चमैन्द्राग्नायुष्यं त्रैष्टुभं ब्रह्मा यक्ष्मनाशनदेवत्यमुत भृग्वंगिराश्चोभौ मन्त्रोक्तदेवाननेनास्तुतामिति । ४ 'शतं जीव', ८ 'अभित्वा' इति जगत्यौ । पूर्वा शक्वरीगर्भा, परा त्र्यवसाना षट्पदाबृहतीगर्भा । ५ 'प्र विशतम्' इति द्वे आनुष्टुभौ । ७ 'जरायै त्वा' इति उष्णिग्बृहतीगर्भापथ्यापंक्तिरिति ॥३॥

---

१ ३।१०।१ मन्त्र का उत्तरार्ध ऋ० वे० ४।५७।७ में देखो ।

२. ३।११।१ सूक्त के आरम्भ के २ मन्त्र अक्षरशः और ३, ४ थोड़े भेद से ऋ० वे० १०।१६१।१-४ में मिलते हैं । वहां इन का ऋषि यक्ष्मनाशनः प्राजापत्यः है । ३।११ के यही आरम्भ के ४ मन्त्र अक्षरशः इसी अथर्ववेद के २०।९६।६-९ में भी मिलते हैं, वहां भी इनका ऋषि ब्रह्मा ही है ।

३।१२।१ 'इहैव ध्रुवाम्' इति नवर्चं शालासूक्तं वास्तोष्पतिशालादैवतं त्रैष्टुभं ब्रह्मा सर्वेणानेन शालामस्तौत् । ३ 'धरुण्यसि शाले' इति बृहती । ६ 'ऋतेन' इति शक्वरीगर्भाजगती । ७ 'एमाम्' आर्ष्यनुष्टुप् । द्वितीया विराड्जगती । ८ 'पूर्णं नारि' इति भुरिक् । ९ 'इमा आपः' इत्यनुष्टुप् ॥

३।१३।१ 'यददः' इति सप्तर्चं वारुणमुत सिन्धुदैवतमानुष्टुभं भृगुस्ता अनेनास्तौदिति । प्रथमा निचृत् । ५ 'आपो भद्रा' इति विराड्जगती । परा निचृदनुष्टुबिति ॥४॥

३।१४।१ 'सं वः' इति नाना देवत्यमुत गोष्ठदेवताकमानुष्टुभं ब्रह्मा मन्त्रोक्तान्देवानस्तौत् । अन्त्यार्षीत्रिष्टुप् ।

३।१५।१ 'इन्द्रमहम्' इत्यष्टर्चं त्रैष्टुभं वैश्वदेवमुतैन्द्राग्नं पण्यकामोऽथर्वा प्रथमया प्रागिन्द्रमस्तौत्परयापथः, [१]परयाग्निम्, [२]परया प्रपणमग्निविक्रयं च, परया देवानग्निं च धनं प्रार्थयन्, उत्तरया देवानिन्द्रं प्रजापतिं सवितारं सोमाग्निं धनरुचिं चेति, ८ परया विश्वानरं जातवेदसमिति । प्रथमा भुरिक् । ४ 'इमामग्ने' इति त्र्यवसाना बृहतीगर्भा षट्पदाविराडत्यष्टिः । ५ 'येन धनेन' इति प्रथमा विराड्जगती । ७ 'उप त्वा नमसा' इत्यनुष्टुप्[३] ८ 'विश्वाहा ते' इति निचृदिति ॥५॥

३।१६।१ [४]'प्रातरग्निम्' इति प्रातःसूक्तं बार्हस्पत्यमुत बहुदेवत्यं त्रैष्टुभमथर्वा प्रथमा बहुदेवत्यार्षी जगती तयाग्नी-

---

१. ३।१५।३ ऋ०वे० ३।२८।३ में है, वहां इसका ऋषि 'कतो वैश्वामित्रः' है।

२. ३।१५।४ का पूर्वार्ध बहुत थोड़े भेद से ऋ० वे० १।३१।१६ में है ।

३ मूल लेखों में 'ष्टुभ' है ।

४. ३।१६ सूक्त ऋ० वे० ७।४१ में यह सूक्त अत्यन्त स्वल्प भेद से आया है। सप्तम मन्त्र वहां विना किसी परिवर्तन से है। ऋ० वे० में इस सूक्त का ऋषि 'वसिष्ठ' है और प्रथम मन्त्र का छन्द निचृज्जगती है ।

न्द्रादीन्मन्त्रोक्तान् देवानाह्वयत्। २ 'प्रार्जितम्' इति पंचभग-देवत्यास्तत्र, ४ 'उतेदानीम्' इति भुरिक्पंक्तिरेताभिरथर्वा भग-मेवास्तौत्। तथान्त्ययोषोदेवत्ययोषसश्च ॥

३।१७।१ [1]'सीरायुञ्जन्ति' इति नवर्चं सीतादेवत्यमानुष्टुभं विश्वामित्रः, सर्वाभिः सीतामेवास्तौत्। प्रथमार्षीगायत्री। २ 'युनक्त सीरा', ५ शुनं सुफालाः', ९ 'घृतेन सीता' इति त्रिष्टुभः। ३ 'लाङ्गलं पवीरवत्' इति पथ्यापंक्तिः। ७ 'शुनासीरे-ह' इति विराट्पुरउष्णिक्। ८ 'सीते वन्दामहे' इति निचृदिति।६।।

३।१८। [2]१ 'इमां खनामि' इति वानस्पत्यमानुष्टुभमथर्वा-नेन सूक्तेन सपत्नीं [3]पराणुदत्। बाणपर्णीमोषधिमस्तौत्। ४ 'उत्तराहम्' इत्यनुष्टुब्गर्भाचतुष्पादुष्णिक्। ६ 'अभि तेऽधाम्' इत्युष्णिग्गर्भापथ्यापंक्तिः ॥

३।१९।१ 'संशितं मे' इत्यष्टर्चं वैश्वदेवमुत चान्द्रमसमुतै-न्द्रमानुष्टुभं वसिष्ठोऽनेन मन्त्रोक्तान्देवानभिष्टूयामित्रान् परा-णुददिति। प्रथमा पथ्याबृहती। ३ 'नीचैः पद्यन्ताम्' इति भुरिग्बृहती। [4]'७ प्रेता जयता' इति विराडास्तारपंक्तिः।

---

१. इस ३।१७ सूक्त का १ मन्त्र ऋ० १०।१०१।४ में है। द्वितीय मन्त्र ऋ० १०।१०१।३ में है, देवता विश्वेदेवाः वा ऋत्विज है। दोनों का ऋषि वहां बुधः सौम्यः है। चतुर्थ मन्त्र थोड़े भेद से ऋ० ४।५७।७ में और वहां ऋषि वामदेव हैं। और इसका उत्तरार्ध अथर्व ३।१०।१ में भी आया है। पंचम मन्त्र कुछ भेद से ऋ० ४।५७।८ में आया है। षष्ठ मन्त्र विना भेद से ४।५७।४ में मिलता है, ऋषि वामदेव है। सप्तम कुछ भेद से ऋ० ४।५७।५ में है और अष्टम कुछ भेद से ऋ० ४।५७।६ में है।

२. यह सूक्त बहुत स्वल्प भेद से ऋ० वे० १०।१४५ में आता है उसमें इस सूक्त का ऋषि 'इन्द्राणी' है। ३. सब मूल लेखों में पाठ "णुदत्यै" है।

४. थोड़े भेद से यह मन्त्र ऋ० १०।१०३।१३ में है, वहां ऋषि अप्रतिरथ ऐन्द्रः है।

[1]५ 'एषामहम्' इति त्रिष्टुप्। ६ 'उद्धर्षन्ताम्' इति त्र्यवसाना त्रिष्टुप्ककुम्मतीगर्भा षट्पदातिजगती। [2]८ 'अवसृष्टा परा पत' इति पथ्यापंक्तिरिति ॥७॥

३।२०। [3]१ 'अयं ते योनिः' इति दशर्चमाग्नेयमुत मन्त्रोक्त-देवत्यमानुष्टुभं प्रागुक्तर्षिः प्रथमाभ्यां द्वाभ्यां पञ्चम्याचाग्निम-भिष्टूय रयिं चाप्रार्थयत्। सप्तभिरितरान् भगादीन्देवानिति। तत्र ६ 'इन्द्रवायू' पथ्यापंक्तिः। ८ 'वाजस्य नु' इति विराड्जगती॥

३।२१।१ 'ये अग्नयः' इति दशर्चमाग्नेयं त्रैष्टुभमन्त्यास्तिस्रो बहुदेवत्याः, सप्तभिः प्रथमाभिरग्निमस्तौत्पराभिस्तिसृभिर्मन्त्रो-क्तान्देवानिति। प्रथमा पुरोऽनुष्टुप्। ५ 'यं त्वा होतारम्' इति जगती। ७ 'दिवं पृथिवीम्' इति विराड्गर्भा। [4]६ 'उक्षान्नाय' इत्युपरिष्टाद्विराड्बृहती। ८ 'हिरण्यपाणि, २ 'यः सोमे' इति, ३ 'य इन्द्रेण' इति भुरिजः,। ९ 'शान्तो अग्निः' इति द्वे अनु-ष्टुभौ। पूर्वानिचृदिति ॥८॥

३।२२।१ 'हस्तिवर्चसम्' इति बार्हस्पत्यमुतवैश्वदेवमानुष्टुभं वर्चस्यं सर्वान् देवान् वर्चोऽप्रार्थयदिति प्रागुक्तर्षिः। प्रथमावि-राट्त्रिष्टुप्। ३ 'येन हस्ती' इति पंचपदापरानुष्टुप्विराडति जगती। ४ 'यत्ते वर्चः' इति त्र्यवसाना षट्पदाजगती॥

३।२३।१ 'येन वेहद्' इति चान्द्रमसमुतयोनिदेवत्यमानुष्टुभं

---

१. Whitney ने अपने भाष्य में पञ्चम मन्त्र का छन्द नहीं दिया।

२. थोड़े भेद से यह मन्त्र ऋ० ६।७५।१६ में आता है वहां ऋषि 'पायु-भरद्वाज' है।

३. इस ३।२० सूक्त का १ मन्त्र थोड़े भेद से ऋ० ३।२९।१० में है इसका ऋषि विश्वामित्र है। शेष २-७ मन्त्र ऋ० १०।१४१ में थोड़े भेद से आते हैं। सप्तम मन्त्र में भेद बिलकुल नहीं। इनका ऋषि 'अग्निस्तापसः हैं।

४. यह मन्त्र ऋ० ८।४३।११ में कुछ भेद से आया है।

ब्रह्मानेन पुत्रमप्रार्थयद्योनिमभिष्टूय प्रजाया इति । ५ 'कृणोमि ते प्राजापत्यम्' इत्युपरिष्टाद्भुरिग्बृहती । ६ 'यासां द्यौः' इति स्कन्धोग्रीवीबृहती ॥

३।२४।१ 'पयस्वतीः' इति सप्तर्चं वानस्पत्यमानुष्टुभं भृगुरुतप्राजापत्यं मन्त्रोक्ता अस्तौद्देवता इति । २ 'वेदाहम्' इति निचृत्पथ्यापंक्तिः ॥

३।२५।१ 'उत्तुदस्त्वा' इति मैत्रावरुणमानुष्टुभं कामेषुदेवताकं च ततोऽनेन मन्त्रोक्तान्देवानस्तौत्, जायाकामश्चस्ववशायतामिति ॥६॥

३।२६।१ 'ये स्थां स्थ प्राच्याम्' इति द्वे रौद्रे, पूर्वं त्रैष्टुभमुत्तरमाष्टिकमथर्वा प्रत्यृचमग्न्यादि बहुदेवत्ये च । पूर्वया प्राचीस्थान् साग्नीन्हेतिनाम्नोदेवानस्तौदिति । द्वितीयया दक्षिणस्थान् सकामानाविष्यवनाम्नो देवान्, परया प्रतीचीस्थान् वैराजनाम्नो व्युक्तान्देवान्, परयोदीचीस्थान् सवातान् प्रविध्यन्तनाम्नो देवान्, परया ध्रुवस्थान् निलिम्पनाम्नोदेवान् सौषधिकान्, परयोर्ध्वस्थान् अवस्वन्त नाम्नोदेवान् बृहस्पतियुक्तान्, सर्वा ऋचः पूर्वस्य प्रत्येकं पंचपदा विपरीतपाद [1]लक्ष्मा भवन्ति । पूर्वात्रिष्टुप् । तृतीयाचतुर्थ्यौ भुरिजौ । द्वितीया पञ्चम्यान्त्या जगत्यौ । द्वितीयस्य पूर्वया प्राचींदिशमग्निमासितामादित्यामस्तौत्, द्वितीयया दक्षिणमिन्द्रं तिरश्चिराजिपितॄँस्तृतीयया प्रतीचीं वरुणं पृदाकुमन्नम्, परयोदीचीं सोमं स्वजमशनिं परया ध्रुवां विष्णुं कल्माषग्रीवं वीरुधः, परयोर्ध्वं बृहस्पतिश्चित्रं वर्षामिति ॥

अस्यापि षट् प्रत्येकं पञ्चपदा अष्टयस्तत्र द्वितीययात्यष्टिः । पञ्चमीभुरिगेकैकं ककुम्मतीगर्भा द्वे इति ॥

---

१. ङ यक्ष्मा ।

३।२८।१ 'एकैकयैषा' इति यामिन्यमानुष्टुभं ब्रह्मानेन यमिनोमस्तौत्, पशु पोषणायेति । प्रथमातिशक्वरीगर्भा चतुष्पदाति जगती । ४ 'इह पुष्टिः' इति यवमध्या विराड्ककुप् । ५ 'यत्रा सुहार्दः' इति त्रिष्टुप् । ६ 'यत्रा सुहार्दाम्' इति विराड्गर्भाप्रस्तारपंक्तिः ॥

३।२९।१ 'यद्राजानः' इत्यष्टर्चं शितिपादमाविदेवत्यमानुष्टुभमुद्दालकोऽनेन षडर्चेन शितिपादमविमस्तौत् । सप्तमी कामदेवत्या तयाकामम् । परा भौमा तया भूमिमिति । प्रथमातृतीये पथ्यापंक्ती । ७ 'क इदम्' इति त्र्यवसाना षट्पादुपरिष्टाद्दैवीबृहती ककुम्मतीगर्भाविराड्जगती । ८ 'भूमिष्ट्वा' इत्युपरिष्टाद्बृहतीति ॥११॥

३।३०।१ 'सहृदयम्' इति सप्तर्चं चान्द्रमसं सांमनस्यमानुष्टुभमथर्वानेन दम्पत्योः समीकरणाय सांमनस्यमविद्वेषमस्तौदिति । ५ 'ज्यायस्वन्तः' इति विराड्जगती । ६ 'समानी प्रपा' इति प्रस्तारपंक्तिः । ७ 'सध्रीचीनान्वः' इति त्रिष्टुप् ॥

३।३१।१ 'वि देवाः' इत्येकादशर्चं पाप्महादेवत्यमानुष्टुभं ब्रह्मानेन सूक्तेन मन्त्रोक्तान् देवान् [1]पाप्मघ्नास्तौत् । ४ 'वी मे' इति भुरिक् । [2]५ 'त्वष्टा दुहित्रे' इति विराट्प्रस्तारपक्तिरिति ॥१२॥



१. ङ पाप्मघ्न्या ।

२. कुछ भेद से यह मन्त्र ऋ० १०।१७।१ में आता है। वहां ऋषि देवश्रवायामायन है।

# [†]अथ चतुर्थं काण्डम्

४।१।१ 'ब्रह्म जज्ञानम्' इति काण्डं सप्तर्चं सूक्तं प्रकृतिरन्याविकृतिरित्यवगच्छेत् । १ 'ब्रह्म जज्ञानम्' इति वेनो बार्हस्पत्यमुतादित्यदैवतम् ॥

४।२ [1]।१ 'य आत्मदा' इत्यष्टर्चमात्मदैवतमुभे त्रैष्टुभे भवतस्तां तां देवतां द्वाभ्यामस्तौत् । ४।१।२ 'इयं पित्र्या', ४।१।५ 'स बुध्न्यात्' इति । ६ 'आपो अग्रे' इति पुरोऽनुष्टुप् । ८ 'आपो वत्सम्' इत्युपरिष्टाज्ज्योतिरिति ॥

४।३।१ 'उदितः' इति रौद्रमुतव्याघ्रदेवत्यमानुष्टुभमथर्वानेन मन्त्रोक्तं व्याघ्रमस्तौत् । प्रथमा पथ्यापंक्तिः । ३ 'अक्ष्यौ च ते' इति गायत्री । ७ 'यत्संयमः' इति ककुम्मतीगर्भोपरिष्टाद् बृहती ॥

४।४।१ 'यां त्वा' इत्यष्टर्चं वानस्पत्यमानुष्टुभमनेन मन्त्रोक्तां उच्छुष्मौषधिं खात्वास्तौदिति च । ४ 'उच्छुष्मौषधीनाम्' इति पुरउष्णिक । ६ 'अद्याग्ने' इति बहुदेवत्ये इमे द्वे भुरिजौ पुरोष्णिक् ॥

४।५ [2]।१ 'सहस्र शृङ्गः' इति ब्रह्मा स्वापनं वार्षभमानुष्टुभम् । २ 'न भूमिम्' इति भुरिक् । ७ 'स्वप्न स्वप्ना' इति पुरस्ताज्ज्योतिस्त्रिष्टुबिति ॥१३॥

---

†. यह लेख हमारा है।

१. थोड़े भेद से यह सूक्त मन्त्र (८) के विना ऋ० १०।१२१ में आया है, वहां ऋषि 'हिरण्यगर्भः प्राजापत्यः' है और देवता 'कः' है।

२. इस ४।५ सूक्त के १, ३, ५, ६ मन्त्र ऋ० ७।५५ में क्रम से ७,८,६,५ में थोड़े भेद से आये हैं, वहां ऋषि वसिष्ठ और देवता इन्द्र है।

४।६।१ 'ब्राह्मणो जज्ञे' इति द्वे सूक्ते पूर्वमष्टर्चं गरुत्मान् तक्षकदेवत्यमुत्तरं वानस्पत्यमानुष्टुभे द्वाभ्यां मन्त्रोक्तदेवता अस्तौत् ॥

४।७।४ 'वि ते मदम्' इति स्वराट् ॥

४।८।१ 'भूतो भूतेषु' इति राज्याभिषेक्यं चान्द्रमसमाप्यमानुष्टुभमथर्वांगिरा मन्त्रोक्ता देवता अनेनास्तौत् । आद्या भुरिक् त्रिष्टुप् । ३ 'आतिष्ठन्तम्' इति त्रिष्टुप् । ७ 'एना व्याघ्रम्' इत्याद्या, ५ 'या आपः' इति विराट्प्रस्तारपंक्तिरिति ॥

४।९।१ [1]'एहि जीवम्' इति दशर्चं भृगुस्त्रैकाकुदांजनदैवतमानुष्टुभमनेन सूक्तेन तदेवांजनं बहुधास्तौत् । २ 'परिपाणम्' इति ककुम्मती, परापथ्यापंक्तिरिति ॥१४॥

४।१०।१ 'वाताज्जातः' इति शंखमणिसूक्तं तद्दैवतमानुष्टुभमथर्वाभिः कृशनमस्तौत् । [2]६ 'हिरण्यानाम्' इति पथ्यापंक्तिः । ७ 'देवानामस्थि' इति पञ्चपदा परानुष्टुप्शक्वरीति ॥

४।११।१ 'अनड्वान्दाधार' इति द्वादशर्चं भृग्वंगिरा आनडुहं त्रैष्टुभं तां देवतामिन्द्ररूपेणैवास्तौदिति । प्रथमाचतुर्थ्यौ जगत्यौ । द्वितीयाभुरिक् । ७ 'इन्द्रो रूपेण' इति त्र्यवसानाषट्पदानुष्टुब्गर्भोपरिष्टा [3]जागतानिचृच्छक्वरी । ८ 'मध्यमेतदनुडुहः' इति पंचानुष्टुभ इति ॥१५॥

---

१. इस सूक्त के सप्तम मन्त्र का उत्तरार्ध स्वल्प भेद से ऋ० १०।९७ में आता है ।

२. बी. के विना क. ख. ग. ङ. में हिरण्यानाम् के स्थान में 'अग्निर्हिरण्यानाम्' पाठ आया है बी. में पाठ मूल वेदवत् है । किसी भी मूलवेद में 'हिरण्यानां' के पूर्व 'अग्निः' पद नहीं है, यदि 'अग्नि' पद पूर्व लगावें तो पथ्यापंक्तिः छन्द नहीं बनता अब क्या कभी मूल संहिता में यह पद पूर्व था अथवा कुछ और बात थी इसका निर्णय करना अत्यन्त कठिन है । ३. ङ. जागती ।

  

४।१२।१ 'रोहिण्यसि' इति वानस्पत्यमानुष्टुभमृभुर्मन्त्रोक्तां देवतामस्तौदिति । प्रथमात्रिपदागायत्री । ६ 'स उत्तिष्ठ' इति त्रिपदा यवमध्या भुरिग्गायत्री । ७'यदि कर्त्तम्' इति बृहतीति ॥

४।१३।१ [1]'उत देवा' इति चान्द्रमसमुत वैश्वदेवमानुष्टुभं शंतातिरनेन मन्त्रोक्तान् विश्वान् देवानस्तौदिति ॥

४।१४।१ 'अजो हि' इति नवर्चं भृगुराज्यमाग्नेयं त्रैष्टुभम् तावानेनास्तौत् । २ 'क्रमध्वमग्निना' ४ 'स्वर्यन्तः' इत्यनुष्टुभौ । ३'पृष्ठात् पृथिव्याः' इति प्रस्तारपंक्तिः । ७'पञ्चौदनं' । ६'शृतमजम्' इति जगत्यौ । ८ 'प्रतीच्यां दिशि' इति पञ्चपदाति शक्वरीति ॥१६॥

४।१५।१ 'समुत्पतन्तु' इति षोडशर्चमथर्वा मरुत्पर्जन्यदेवत्यं त्रैष्टुभं प्रथमया प्रथमं सर्वा दिशोऽस्तौत् । पराभ्यां वीरुधश्च, परया मारुतपर्जन्यान्, परया मरुतः, परया प्रजापतिस्तनयित्नुनासहाह्वयत् । परया वरुणं तिसृभिस्ततोमण्डूकान् पितृँश्च परया वातमप्रार्थयत् । आद्ये द्वे, ५ 'उदीरयत' इति विराड्जगत्यौ । १० 'अपामग्निः' इति भुरिक् । ४ 'गणास्त्वा' इति विराड्पुरस्ताद्बृहती । ७ 'सं वोऽवन्तु' इति, [2]१३ संवत्सरं शशयाना' इति द्वे अनुष्टुभौ । ६ 'आपो विद्युत्' इति पथ्यापंक्तिः । १२ 'अपो निषिञ्चन्' इति पंचपदानुष्टुब्गर्भा भुरिक् । १५ 'खण्वखाइ खैमखा' इति शकुमत्यनुष्टुबिति ॥१७॥

---

१. यह सूक्त छठे मन्त्र के विना ऋ० १०।१३७ में आता है। वहां इस के ऋषि एक-एक ऋचा वाले सात हैं। 'सप्त ऋषय एकर्चाः'। छठा मन्त्र १०।६०।१२ में है ऋषि बन्ध्वादयो गौपायनः, देवता हस्तः ।

२. यह ४।१५।१३ मन्त्र ऋ० ७।१०३।१, में आया है। वहां इसका ऋषि वसिष्ठ और देवता मण्डूक है।

४।१६।१ 'बृहन्नेषाम्' इति सत्यानृतोऽन्वी[1]क्षणसूक्तं नवर्चं ब्रह्मा वारुणं त्रैष्टुभमाद्यश्चतसृभिर्दिव्यसा देवविज्ञानमकरोत् परया वरुणेरणं, पराभ्यां वरुणप्रार्थनं, ततो द्वाभ्यां वरुणोक्तिरिति। ४।१६ प्रथमानुष्टुप्। ८ 'यः समाभ्यः' इति त्रिपान्महाबृहती। ९ 'तंस्त्वा' इति विराण्नाम त्रिपाद्गायत्री। ५'सर्वं तद्राजा' इति भुरिक्, ७'शतेन पाशैः' इति जगतीति॥

४।१७।१ 'ईशानां त्वा' इति चतुर्विंशर्चं त्रयं सूक्तानां शुक्रोऽपामार्ग वनस्पतिदेवत्यमानुष्टुभं सर्वाभिरपामार्गवीरुधमस्तौत्। ततः कृत्यामशमत्। १८।६ 'यश्चकार न शशाक' इति बृहतीगर्भा। १९।२ 'ब्राह्मणेन पर्युक्तासि' इति पथ्यापंक्तिरिति॥१८॥

४।२०।१ 'आ पश्यति' इति नवर्चं मातृनामा ऋषिर्मातृनामादैवतमानुष्टुभमनेनौषधिमेवास्तौत्। प्रथमा स्वराट्। अन्त्याभुरिक् इति॥

४।२१[2]।१ 'आ गावः' इति ब्रह्मगव्यं त्रैष्टुभमनेन गावोऽस्तौदिति। २ 'इन्द्रो यज्वने' इति तिस्रो जगत्य इति॥

४।२२।१ 'इममिन्द्रवर्धय' इति वसिष्ठ ऐन्द्रं त्रैष्टुभम[3]थर्वा क्षत्रियाय राज्ञे चन्द्रमसे प्रथमाभिः पञ्चभिः निरमित्रीकरणं मुख्येनेन्द्रमप्रार्थयत्। ग्रामगवाश्वादि सर्वं राज्योपकरणं च ततः पराभ्यामन्त्याभ्यामिन्द्रो[4]रूपेण स्वयमेव[5]क्षत्रियराजानं चन्द्रमसमाशिषा प्राणुददिति॥१९॥

---

१. क ख. ग. ङ. वीचक्षण।

२. यह ४।२१ सूक्त ऋ० ६।२८।१-७ में है वहां ऋषि भरद्वाज बार्हस्पत्य है।

३. ह्वि० त्रैष्टुभं सोऽथर्वा।

४. ह्वि० इन्द्र रूपेण।

५. ह्वि० क्षत्रियं।

४।२३।१ 'अग्नेर्मन्वे' इति सप्त मृगारसंज्ञकानि सूक्तानि भृगारो नाना देवत्यानि त्रैष्टुभानि। ततः १ 'अग्नेर्मन्वे' इत्यनेन प्रथमं प्रचेतसमग्निमस्तौत् ॥

४।२४।१ 'इन्द्रस्य मन्महे' इति इन्द्रम् ॥

४।२५।१ 'वायोः सवितुः' इति वायुसवितारौ ॥

४।२६।१ 'मन्वे वां द्यावापृथिवी' इति द्यावापृथिव्यौ ॥

४।२७।१ 'मरुतां मन्वे' इति मरुतो देवान् ॥

४।२८।१'भवाशर्वौ मन्वे वाम्' इति भवशर्वावुतरौद्रमथर्वा॥

४।२९।१ 'मन्वे वां मित्रावरुणौ' इति मित्रावरुणौतन्मिषतः परानृषीनित्युत द्रुह्वणस्तत्र। २३।३ 'यामन्यामन्' इति पुरस्ताज्ज्योतिष्मती। २३।४ 'सुजातं जातवेदसम्' इत्यनुष्टुप्। ६ 'येन देवाः' इति प्रस्तारपंक्तिरिति। २४।१ 'इन्द्रस्य मन्महे' इति शाक्वरीगर्भापुरःशक्वरी। २५।३ 'तव व्रते' इत्यतिशक्वरी। २६।१ 'मन्वे वां द्यावापृथिवी' इति परोऽष्टिरित्युभेजगत्यौ। २५।७ 'उप श्रेष्ठा नः' इति पथ्याबृहती। २८।१ 'भवाशर्वौ मन्वे वाम्' इति द्व्यतिजागतगर्भाभुरिक्। २६।७ 'यन्मेदम्' इति शाक्वरगर्भातिमध्येज्योतिः। २९।७ 'ययोः रथः' इति शाक्वरीगर्भाजगतीति। सर्वेषां भृंगाणां सर्वासंगत्यैवमेकोनपंचाशत् परानुष्टुभ इति ॥२०॥

४।३०।[1] १ 'अहं रुद्रेभिः' इत्यष्टर्चमथर्वा वाग्देवत्यं त्रैष्टुभं स्वयमेवाहंमितिवाचंसर्वरूप सर्वात्मिकांसर्वदेवमयीमित्यस्तौत्। ६ 'अहं सोमम्' इति जगती ॥

४।३१[2]।१ 'त्वया मन्यो'। ४।३२।१ 'यस्ते मन्यो' इति

१. यह सूक्त ऋ० १०।१२५ में है। वहां ऋषि वागाम्भृणी और देवता भी वागाम्भृणी है।

२. यह सूक्त ऋ० १०।८४ में है। वहां ऋषि मन्युस्तापसः है।

द्वे ब्रह्मा स्कन्दोमन्युर्दैवते त्रैष्टुभे आभ्यांसेनान्योजयेन्मन्युः सूक्तमस्तूयत् । ३१।२ 'अग्निरिव मन्यो' । ३१।४ 'एको बहूनाम्' इति भुरिजौ । ३१।५ 'विजेषकृत्' इति तिस्रः ।।

४।३२। [1]१ 'यस्ते मन्यो' इति जगती ।।

४।३३ [2]१ 'अप नः शोशुचत्' इति ब्रह्मा पाप्मत्यमाग्नेयमष्टर्चं गायत्रम् ।।

४।३४।१ 'ब्रह्मास्य' इत्यष्टर्चमथर्वा । ब्रह्मास्यौदनं त्रैष्टुभं ४ 'विष्टारिणम्' इत्युत्तमाभुरिक् । ५ 'एष यज्ञानाम्' इति, त्र्यवसाना सप्तपाद कृतिः । ६ 'घृतह्लदा' इति पञ्चपदातिशक्वरी । पराभुरिक्शक्वरी । ८ 'इममोदनम्' इति जगती ।।

४।३५।१ 'यमोदनम्' इति प्रजापतिरा[3]तिमार्त्यं त्रैष्टुभम् । ३ 'यो दाधार' इति भुरिक् जगतीति ।।

४।३६।१ 'तान्सत्यौजाः' इति चातनः [4]सत्यौजसमाग्नेयमानुष्टुभम् । ९ 'ये मा क्रोधयन्ति' इति भुरिगिति ।।२१।।

४।३७।१ 'त्वया पूर्वम्' इति द्वादशर्चं बादरायणिरजश्रृंग्यप्सरोदेवत्यमानुष्टुभम् । प्रथमाभ्यां द्वाभ्यामोषधिमस्तौत् । पराभिस्तिसृभिरप्सरसः, परयौषधिं, पराभिःषड्भिर्गन्धर्वाप्सरौषधिरिति । ३ 'नदीं यन्तु' इति त्र्यवसाना षट्पदात्रिष्टुप् । ५ 'यत्र वः प्रेङ्खा' इति प्रस्तारपंक्तिः । ७ 'आनृत्यतः' इति परोष्णिक् । ११ 'श्वेवैक' इति षट्पदाजगती, परया निचृदिति ।।

४।३८।१ 'उद्भिन्दतीम्' इति द्विदेवत्यमानुष्टुभम् । सोऽक्षे-

---

१. यह सूक्त ऋ० १०।८३ में है इस का भी ऋषि ३१ सूक्त वाला है।

२. यह सूक्त ऋ० १।९७ में है। ऋषि कुत्स आङ्गिरस है।

३. ह्वि० आतिमर्त्यम् E. । ह्वि आतिमर्च्यम् Br ।

४. ह्वि सात्यौजसम् ।

विदेवनायाद्याभिश्चतसृभिरप्सरामाह्वयत् । पराभिस्तिसृभिर्वाजिनीवंतमृषभमस्तौत् । ३ 'यायैः परि' इति षट्पदा त्र्यवसाना जगती । तथा ५ 'सूर्यस्य रश्मीन्' इति भुरिगत्यष्टिः । ६ 'अन्तरिक्षेण' इति पूर्वात्रिष्टुबुत्तरात्र्यवसाना पञ्चपदानुष्टुब्गर्भा पुरउपरिष्टाज्ज्योतिष्मती जगतीति ॥२२॥

४।३९।१ 'पृथिव्यामग्नये' इति दशर्चमंगिराः सान्नत्यं नानादेवत्यं । पांक्तं तथान्त्ये द्वे आग्नेयौ त्रैष्टुभौ । तत्र प्रथमाभ्यां द्वाभ्यां पृथिव्यग्नी स्तुत्वाप्रार्थयत् । पराभ्यां वाय्वन्तरिक्षे, पराभ्यां दिवादित्यौ, पराभ्यां दिक्चन्द्रमसस्ततः, पराभ्यां ब्रह्मा जातवेदसमग्नि प्रार्थ्यायजदिति । १ 'पृथिव्याम्', ३ 'अन्तरिक्षे', ५ 'दिवि', ७ 'दिक्षु' इति त्रिपादा महाबृहत्यः । २ 'पृथिवी', ४ 'अन्तरिक्ष', ६ 'द्यौः', ८ 'दिशः एताश्चतस्रः संस्तारपंक्तयः ॥

४।४०।१ 'ये पुरस्तात्' इति कृत्याप्रतिहरण[1]मष्टर्चं शुक्रो बहुदेवत्यं त्रैष्टुभम् । प्रथमया प्राच्यमग्निमस्तौत्, द्वितीयया दक्षिणस्यां यमम्, तृतीयया प्रतीच्यां वरुणं, परयोत्तरतः सोमम्, परयाधस्ताद्भूमिं, परयान्तरिक्षे वायुं, परयोपरिष्टात्सूर्यं, ततो दिगन्तर्देशेभ्यः सर्वत्र ब्रह्मेति ब्राह्मणं सर्वत्र । जातवेद आभिमुख्येनास्तौत् । २ 'ये दक्षिणतः' । ८ 'ये दिशामन्तर्देशेभ्यः' इति जगत्यौ । द्वितीयया पुरोऽतिशक्वरी पादयुगिति ॥२३॥

इति ब्रह्मवेदोक्तमन्त्राणां बृहत्सर्वानुक्रमणिकायां द्वितीयः पटलः समाप्तः ॥



१. ह्वि० के Br. लेख में अष्टर्चं हैं दूसरे E में नहीं ।

# [‡]अथ पंचमं काण्डम्

ॐ अथैव वक्ष्यमाणमंत्रेषु सूक्तप्रकृति[1] सार्षिछन्दोदैवतेष्व-वगच्छेत् सर्वत्रेति ॥

५।१।[2] १ 'ऋधङ् मन्त्रः ॥

५।२।[3] १ 'तदिदास' इति द्वे वारुणे त्रैष्टुभे ॥

५।३।[4] १ 'ममाग्ने वर्चः' इत्याग्नेयम्, पूर्वे नवके, परमेका-दशकं[5] त्रैष्टुभं। बृहद्दिवोऽथर्वा प्रथमस्या [6]पराबृहती त्रिष्टुबंत्या त्र्यवसाना षट्पदात्यष्टिः। १० 'ये नः सपत्नाः' इति विराड्-जगती। ५।१।७ 'उतामृतासुः' इति विराट्। ५।२।६ 'एवा महान्', ५।३।२ 'अग्ने मन्युम्' इति भुरिजौ पूर्वापराति जागतौ। उरु व्यचा नः पूर्वसूक्तद्वयेन वरुणमस्तौत्। ५।३।१ 'ममाग्ने वर्चः' इति द्वाभ्यामृग्भ्यां विहव्योऽग्निम्, पराभ्यां देवान्, परया द्रविणोदादि प्रार्थनम्, परा वैश्वदेवी, परा सौमी, तत्परा रौद्री, परे वैश्वदेव्यौ, परमैन्द्रीति च ॥१॥

५।४।१ 'यो गिरिषु' दशकं भृग्वंगिरा यक्ष्मनाशन कुष्ठ-

---

‡ यह लेख हमारा है।

१. ङ. सा ऋषि।

२. ५।१ सूक्त का छठा मन्त्र ऋ० १०।५।६ में आया है। वहां इसका ऋषि 'त्रित' और देवता अग्निः है।

३. ५।२ यह समग्र सूक्त अत्यन्त स्वल्प भेद से ऋ० १०।१२० में आया है वहां भी इसका ऋषि 'बृहद्दिव आथर्वणः' है।

४. ५।३ सूक्त के ७, ११ मन्त्रों के विना यह सूक्त ऋ० १०।१२८ में स्वल्प भेद से आया है वहां इसका ऋषि 'विहव्य' और 'विश्वेदेवाः' देवता है।

५. क. ख. ग. ङ. त्रिष्टुभम्।

६. वी· 'प्रथमस्याद्या परा'।

देवत्यमानुष्टुभं सर्वाभिः कुष्ठतक्मनाशनं वास्तौत् ६ 'इमं मे कुष्ठ' इति गायत्री । ५ 'हिरण्ययाः पन्थानः' इति भुरिक् । १० 'शीर्षामयम्' इत्युष्णिगगर्भानिचृत् ॥

५।५।१ 'रात्री माता' इति [1]लाक्षिकमानुष्टुभं नवकं ॥

५।६।[2] १ 'ब्रह्म जज्ञानं' सोमारुद्रीयं चतुर्दशकं त्रैष्टुभमेतदादीनि समिद्धो अंत्यातः प्राचीनान्यर्थवा पूर्वेण लाक्षामस्तौदिति । उत्तरस्याद्यया ब्रह्मादित्यम्, द्वितीययाकर्म्माणि, पराभ्यां रुद्रगणान् । ५ 'न्वे३तेन' इति तिसृभिः सोमारुद्रौ । [3]८ 'मुमुक्तम्' ५।६ इत्येकावसानाच्यनुष्टुब्द्विपदा । तयोरेव प्रार्थनम्, परया हेतिं पराभिश्चतसृभिः सर्वात्मकं रुद्रमिति । २ 'तत्र अनाप्ताये', इत्यनुष्टुप् । ३ 'सहस्रधार एव' इति द्वे जगत्यौ । तत्र ४ 'पर्यू षु' इत्यनुष्टुबुष्णिक्त्रिष्टुब्गर्भापंचपदा । ५ 'न्वे३तेन' इति तिस्रस्त्रिपदाविराण्नामगायत्र्यः । १० 'यो३स्मान्' इति प्रस्तारपंक्तिः । ११ 'इन्द्रस्य गृहः' इति चतस्रः पंक्तयोऽत्र, तुरीया स्वराडिति ॥२॥

५।७।१ 'आ नो भर' इति दशकं बहुदेवत्यमानुष्टुभमाद्यास्तिस्रोऽरातीयाः, परे सारस्वत्यौ, पराः सर्वाः पुनररातीयाः । यद्देवत्येति पारिभाषिकं स्मरणमिति । सरस्वत्या मधुवाचोऽप्रार्थयदिन्द्राग्निभ्यां वसूनि चेति । प्रथमाविराड्गर्भा प्रस्तार-

---

१. मूल लेखों में लाक्ष्मक पाठ है ।

२. ५।६ सूक्त का १ मन्त्र अथर्व ४।१।१ में पहले भी आया है । वहां इसका ऋषि 'वेन' और 'वृहस्पति' और 'आदित्य' है । मन्त्र २ अथर्व ४।७।७ में है । वहां ऋषि 'गरुत्मान्' और देवता तक्षक है । मन्त्र ३ स्वल्प भेद से ऋ० ९।७३।७ में है वहां ऋषि 'पवित्र' है । मन्त्र ४ ऋ० ९।१०।१ में अल्पभेद से आया है । ऋषि 'त्र्यरुणत्रसदस्यू' है ।

३. बी. मुमुक्तमस्मानिति ।

७।८४।[1] १ 'अनाधृष्यो जातवेदाः' इति तृचं भृगुरैन्द्रं त्रैष्टुभम् । प्रथमाग्नेयी जगतीति ॥

७।८५।१ 'त्यमू षु' इति ताक्ष्यंदेवत्यं त्रैष्टुभम् ॥

७।८६।[2] १ 'त्रातारमिन्द्रम्' इत्यैन्द्रं त्रैष्टुभमुभे स्वस्त्ययनकामोऽथर्वा ॥

७।८७।१ 'यो अग्नौ रुद्रः' इत्यथर्वा रौद्रं जागतम् ॥

७।८८।१ 'अपेहि' इति तक्षकदेवत्यं गरुत्मान् त्र्यवसाना बृहतीति ॥

७।८९।१ 'अपो दिव्या' इति चतुर्ऋचमाग्नेयमानुष्टुभं सिन्धुद्वीपः । ४ 'एधोसि' इति त्रिपात्निचृत्परोष्णिक् ॥

७।९०। [3]१ 'अपि वृश्च' इति तृचमंगिरा मन्त्रोक्तदेवत्यमाद्या गायत्री । २ 'वयं तत्' इति विराट् पुरस्ताद्बृहती । ३ 'यथा शेपः' इति त्र्यवसाना षट्पदा भुरिग्जगतीति ॥१२॥

७।९१। [4]१ 'इन्द्रः सुत्रामा' इत्यथर्वा चान्द्रमसं त्रैष्टुभम् ॥

७।९२। [5]१ 'स सुत्रामा' इति च प्रागुक्तर्षिच्छन्दोदेवत्यम् ॥

७।९३।१ 'इन्द्रेण मन्युना' इति भृग्वंगिरा ऐन्द्रं गायत्रम् ॥

७।९४। [6]१ 'ध्रुवं ध्रुवेण' इत्यथर्वा सौम्यमानुष्टुभम् ॥

---

१. ७।८४।२ ऋ० १०।१८०।३, २ में है ऋषि 'जयः' है।

२. ७।८६।१ ऋ० ६।४७।११ में है, गर्ग ऋषि है।

३. ७।९०।१, २ । ऋ० ८।४०।६ में आये हैं।

४ ७।९१।१ ऋ० १०।१३१।६ में ऋषि सुकीर्त्तिः काक्षीवत है।

५. ७।९२।१ ऋ० ६।४७।१३ तथा १०।१३१।७ में आया है ऋषि दोनों स्थलों में वत् है।

६. ७।९४।१ ऋ० १०।१७३।६ में है, ऋषि ध्रुवः है।

७।९५।१ 'उदस्यश्यावौ' इति तृचम् ॥

७।९६।१ 'असदन् गाव' इति [1]प्रागुक्तमुभे कपिञ्जलः पूर्वं मन्त्रोक्तगृध्रदेवत्यमुत्तरं वायसमुभे आनुष्टुभे । ९५।२ 'अहमेनौ' इति द्वे भुरिजौ ॥

७।९७।[2] १ 'यदद्य त्वा' इति सूक्तमष्टर्चमथर्वा मन्त्रोक्तैन्द्राग्नं त्रैष्टुभमनेन यज्ञसम्पूर्णकामो यज्ञे पतिमिष्ट्वाप्रार्थयत् । ५ 'यज्ञ यज्ञम्' इति त्रिपदार्षी भुरिग्गायत्री । ६ 'एष ते यज्ञः' इति त्रिपात्प्राजापत्याबृहती । ७ 'वषड्हुतेभ्यः' इति त्रिपदा साम्नीभुरिग्जगती । ८ 'मनसस्पते' इत्युपरिष्टाद्बृहती ॥

७।९८।१ 'सं बर्हिः' इति ॥

७।९९।१ 'परि स्तृणीहि' इति द्वे मन्त्रोक्तदैवते त्रैष्टुभे । पूर्वा विराडुत्तरा भुरिक् ॥

७।१००।१ 'पर्यावर्ते दुःष्वप्न्यात्' इति द्वे यमो दुःष्वप्ननाशनदेवत्ये आनुष्टुभे ॥

७।१०२।१ 'नमस्कृत्य' इति प्रजापतिर्मन्त्रोक्तं नानादेवत्यं विराट्पुरस्ताद्बृहतीति ॥१३॥

७।१०३।१ 'को अस्या नः' ॥

७।१०४।१ 'कः पृश्निम्' इति द्वे ब्रह्मात्मदैवते त्रैष्टुभे ॥

७।१०५।१ 'अपक्रामन्' इत्यथर्वा मन्त्रोक्तदेवत्यमानुष्टुभम् ॥

७।१०६।१ 'यदस्मृति' इति मन्त्रोक्तदैवतमुतजातवेदसं परार्द्धं वारुणं बृहतीगर्भा त्रिष्टुप् ॥

---

१. ह्वि० ने 'प्राकृतम्' कल्पित किया है।

२. ७।९७।२ ऋ० ५।४२।४ में अल्पभेद से आया है, ऋषि अत्रि है।

७।१०७।१ 'अव दिवः' इति भृगुःसौर्य्यमुताब्दैवतमानुष्टुभम् ॥

७।१०८।१ 'यो नस्तायत्' इति द्वयृचमाग्नेयं त्रैष्टुभम् । पूर्वा बृहतीगर्भेति ॥

७।१०९।१ 'इदमुग्राय' इति सप्तर्चं बादरायणिराग्नेयमुत मन्त्रोक्तदेवत्यमानुष्टुभं । १ 'इदमुग्राय' इति विराट्पुरस्ताद्-बृहती । २ 'घृतमप्सराभ्यः, ३ 'अप्सरसः, ५ 'यो नो द्युवे, ६ 'सं वसवः' इति त्रिष्टुभः ॥

७।११०।१ 'अग्न इन्द्रः' इति तृचं भृगुरैन्द्राग्नम् । पूर्वा गायत्री । २ 'याभ्यामजयन्' इति त्रिष्टुप् । ३ 'उप त्वा देवः' इत्यनुष्टुप् ॥

७।१११।१ 'इन्द्रस्य कुक्षिरसि' इति ब्रह्मा वार्षभं परा-बृहतीत्रिष्टुप् ॥

७।११२[1] १ 'शुम्भनी' इति द्वयृचं मन्त्रोक्तमाब्दैवतम् । वरुणमानुष्टुभम् । पूर्वा भुरि[2]गिति ॥१४॥

७।११३।१ 'तृष्टके' इति द्वयृचं भार्गवः । तृष्टिकादेवत्य-माद्याविराडनुष्टुप् । परा शङ्कुमती चतुष्पदा भुरिगुष्णिक् ॥

७।११४।१ 'आ ते ददे' इति द्वयृचमग्नीषोमीयमानुष्टुभम् ॥

७।११५।१ 'प्र पतेतः' इति चतुर्ऋचमथर्वाङ्गिराः सावित्रं जातवेदसमानुष्टुभमनेन पापामन्यायागतां लक्ष्मीं निन्दयित्वा, न्यायागतां पुण्यामभिष्टूय मन्त्रोक्तां देवतामप्रार्थयत् । २ 'या मा लक्ष्मीः' इति द्वे त्रैष्टुभौ ॥

---

१. ७।११२।२ ऋ० १०।९७।१६ में है ऋषि 'भिषगाथर्वणः' है । देवता ओषधीः स्तुति है अथर्व ६।९६।२ में भी यह मन्त्र आया है ।

२. क. ग. ङ. इति नहीं ।

७।११६। [1] १ 'नमो रूराय' इति द्वयृचं चान्द्रम[2]सम् । आद्या परोष्णिक् । २ 'यो अन्येद्युः' इत्येकावसाना द्विपदाचर्यनुष्टुप् ॥

७।११७। [3] १ 'आ मन्द्रैः' इत्यैन्द्रं, पथ्याबृहती ॥

७।११८।१ 'मर्माणि ते' इति बहुदेवत्यमुतचान्द्रमसं त्रैष्टुभमिति ॥१५॥

इति ब्रह्मवेदोक्तमन्त्राणां बृहत्सर्वानुक्रमणिकायां पञ्चमः पटलः समाप्तः ॥



१. ७।११६।१ ऋ० ३।४५।१ में आया है, ऋषि विश्वामित्र है ।

२. क. ग. चान्द्रमस्यम् ।

३. ७।११७।१ ऋ० ६।७५।१८ में है, 'पायुर्भारद्वाज' है ।

# †अथाष्टमं काण्डम्

[1]ॐ नमो ब्रह्मवेदाय । ॐ अथेयं प्राग्रापरमे [2]त्यपरंकृषतनु-क्रमेणेत्यनुसंधत्ताभिधेयेनाविष्कृताथर्वमन्त्रर्षिछन्दोदैवतानुक्रान्ति-स्तां गुर्वनुज्ञातो योऽधीतेऽध्यापयति च, स मन्त्रपाठफलं सम्यग-श्नुते । तेन विनियुक्ता मन्त्राश्च सवीर्या भवन्ति । देहान्ते ब्रह्म-लोकमनुभूय किंचित्कालं तदन्विह द्विजोत्तमकुलेऽवतीर्य परम[3]-तुलं सुखं भुङ्क्ते । यः पुनरेतां छद्मनादत्तेग्राहयति वा ततः पठति पाठयति च, स गतायुरिहाप्रतिष्ठो दण्डयश्च भवति । मृतोऽन्ध तामि[4]स्रं, नीचैर्गमनं यावदक्षरं कालमनुभूयेमं पुनर्मृ-त्युलोकं प्राप्योलूकत्वमश्नुते । किंचित्कालं पुनर्मृतोऽपि तमेव नरकमनुभूयेमं पुनरिहावतीर्य द्विजकुले विद्याभ्यासवशाद्गुरुध्रुग्-जन्मान्धोऽवश्यं भवतीति । निश्चितोऽभिभवेदिति यथोक्तप्रकाश-स्य चोभयथा नूनमक्षय्यं सुकृतं भवेदिति ॥

अथ क्षुद्रकाण्डार्थसूक्तमन्त्राणामृषिदैवतछन्दांस्युच्यन्ते । ततो यावदेकादश काण्डान्तमर्थसूक्तप्रकृतिस्तावद्विहाय पर्यायान्वि-राड्वाप्रभृतीनिति तत्र ॥

८।१।१ 'अन्तकाय मृत्यवे' ।

८।२।१ 'आरभस्व' इति द्वे ब्रह्माण्यायुष्ये त्रैष्टुभे अपश्य-दिति । सर्वत्रानुक्तेऽपि शेषोऽनुवर्तते । या यद्देवत्येति चाद्यस्याद्या पुरोबृहती त्रिष्टुप् ॥

---

†. यह लेख हमारा है ।

१ गु० श्री गणेशाय नमः । क. में यहां कुछ नहीं ।

२. ङ. 'अपरं कृषनु' ठीक पाठ पढ़ा नहीं जाता ।

३. ङ. 'कुलं' ।　४. क. ङ. 'तामिश्र' ।

८।१।२ 'उदेनम्' इति द्वे, १७ 'उत् त्वा द्यौः' इति पञ्चानुष्टुभः । ४ 'उत् क्रामातः पुरुष', ६ 'श्यामश्च [1]त्वा', १५ 'जीवेभ्यस्त्वा' इति द्वे प्रस्तारपंक्तयः । ७ 'मा ते मनः' इति त्रिपाद्विराड्गायत्री । ८ 'मा गतानाम्' इति विराट्पथ्याबृहती । १२ 'मा त्वा क्रव्यात्' इति त्र्यवसाना पञ्चपदा जगती । १३ 'बोधश्च त्वा' इति त्रिपाद्भुरिङ्महाबृहती । १४ 'ते त्वा रक्षन्तु' इत्येकावसाना द्विपदा साम्नी भुरिग्बृहती । इदमेकविंशकमिहाद्यमुच्यत इति ॥१॥

८।२।१ 'आ रभस्व' इति द्वे, ७ 'अधिब्रूहि' इति भुरिजः । ३ 'वातात्ते' इत्यास्तारपंक्तिः । ४ 'प्राणेन त्वा' इति प्रस्तारपंक्तिः । ६ 'जीवलां [2]नघा' इति पथ्यापंक्तिः । ८ 'अस्मै मृत्यो' इति पुरस्ताज्ज्योतिष्मती जगती । ९ 'देवानां हेतिः' इति पञ्चपदाजगती । ११ 'कृणोमि ते' इति विष्टारपंक्तिः । १२ 'आरादरातिम्' इति पुरस्ताद्बृहती । १४ 'शिवे ते स्ताम्' इति त्र्यवसाना षट्पदा जगती । १५ 'शिवास्ते' इति पथ्यापंक्तिः । १९ 'यदश्नासि' इत्युपरिष्टाद्बृहती । २१ 'शतं ते' इति सतःपंक्तिः । २२ 'शरदे त्वा', २८ 'अग्नेः शरीरम्' इति पुरस्ताद्बृहत्यौ । ५ 'अयं जीवतु', १० 'यत्ते नियानम्', १६ 'यत्ते वासः' इति तिस्रः, २० 'अन्हे च त्वा' इति, २३ 'मृत्युरीशे' इति तिस्रः, २७ 'ये मृत्यवः' इति चैता अनुष्टुभस्तत्र १७ 'यत् क्षुरेण' इति त्रिपादिदमाद्यं विंशसहितमष्टर्चो परा इति ॥२॥

८।३। [3]१ 'रक्षोहणम्' ॥

---

१. बी. 'त्वा' नहीं ।

२. बी. 'नघारिषामिति' ।

३. ८।३।१ ऋ० १०।८७।१ में है, ऋषि पायुः है ।

८।४।[1] १ 'इन्द्रासोमा' इति द्वे [2]अनुवाकौ चातनः । पूर्वं षड्विंशमाग्नेयमुत्तरं पञ्चर्चविंशकं मन्त्रोक्तदेवत्यम् । जागतमाद्यं त्रैष्टुभम् ॥

८।३।[3] ७ 'उतारब्धान्', १४ 'पराद्य देवाः' इति द्वे, [4]१७ 'संवत्सरीणं पयः', २१ 'तदग्ने', १२ 'यदग्ने' इति भुरिजः । २५ 'ये ते शृङ्गे' इति पञ्चपदा बृहतीगर्भाजगती । २२ 'परि त्वा अग्ने' इति द्वे अनुष्टुभौ । [5]२६ 'अग्नो रक्षांसि' इति गायत्री ॥

८।४।८ 'यो मा पाकेन' इति सप्त, १६ 'यो मायातुम्' इति द्वे, १९ 'प्र वर्तय दिवः', २२ 'उलूकयातुम्', २४ 'इन्द्र जहि' इति त्रिष्टुभः । २० 'एत उ त्ये', २३ 'मा नो रक्षः' इति भुरिजौ । २५ 'प्रति चक्ष्व' इत्यनुष्टुबिति[6] ॥३॥

८।५।१ 'अयं प्रतिसरः' इति द्वाविंशं शुक्रः कृत्यादूषणदेवत्यमुत मन्त्रोक्तदेवत्यमानुष्टुभमाद्योपरिष्टाद्बृहती । द्वितीया त्रिपाद्विराडगायत्री । ३ 'अनेनेन्द्रः' इति चतुष्पाद्भुरिग्जगती । ५ 'तदग्निः' इति संस्तारपंक्तिः भुरिक् । ६ अन्तदंघ्रे' इत्युपरिष्टाद्बृहती । ७ 'ये स्राक्त्यम्' इति द्वे ककुम्मत्यौ । ९ 'याः कृत्याः' इति पुरस्कृतिर्जगती । १० 'अस्मै मणिम्' इति त्रिष्टुप् । ११ 'उत्तमो असि' इति पथ्यापंक्तिः । १४ 'कश्यपस्त्वा' इति

१. ८।४ समग्रसूक्त ऋग्वेद ७।१०४ सूक्त है वहां ऋषि वसिष्ठ है ।

२. क. अनुवाकौ, ङ. बी. अनुवाकं, घ० अनुवाव ।

३. ८।३।२४ ऋ० ५।२।९ में है ऋषि कुमार आत्रेयो वंगो वा जार उभौ वा ।

४. ८।३।१७ ऋ० १०।८७।१७ में है, ऋषि पायु है ।

५. ८।३।२६ ऋ० ७।१५।१० में है, ऋषि वसिष्ठ है ।

६. क. ङ. इति नहीं ।

त्र्यवसाना षट्पदा जगती । १५ 'यस्त्वा कृत्याभिः' इति पुरस्ताद् बृहती । १६ 'एन्द्राग्नं वर्म' इति जगतीगर्भा त्रिष्टुप् । २० 'आ मा रुक्षत्' इति विराड्गर्भा[1]स्तारपंक्तिः । २१ 'अस्मिन्निन्द्रः' इति परा विराट्त्रिष्टुप् । २२ 'स्वस्तिदा विशाम्' इति त्र्यवसाना सप्तपदा विराड्गर्भा भुरिक् शक्वरी[2]ति ॥४॥

८।६।१ 'यौ ते माता' इति षड्विंशं मातृनामा ऋषिर्मातृनामादेवत्यमुत मन्त्रोक्तदेवत्यमानुष्टुभम् । ब्रह्मानेन गर्भरक्षणार्थञ्चास्तौत् । २ 'पलालानुपलालौ' इति पुरस्ताद्बृहती । १० 'ये शालाः' इति त्र्यवसाना षट्पदाजगती । ११ 'ये कुकुन्धाः' इति द्वे, १४ 'ये पूर्वे', १६ 'पर्यस्ताक्षाः' इति पथ्यापंक्तयः । १५ 'येषां पश्चात्' इति त्र्यवसाना सप्तपदा शक्वरी ब्राह्मणस्पत्या । १७ 'उद्धर्षिणम्' इति तथा जगतीति ॥

८।७।१ 'या बभ्रवः' इत्य[3]ष्टाविंशकमथर्वा भैषज्यायुष्यमुत मन्त्रोक्तोषधिदेवताकमानुष्टुभम् । २ 'त्रायन्तामिमं' इत्युपरिष्टाद्भुरिग्बृहती । ३ 'आपो अग्रम्' इति पुरउष्णिक् । ४ 'प्रस्तृणती' इति पंचपदा परानुष्टुबतिजगती । ५ 'यद् वः सहः' इति द्वे पथ्यापंक्ती द्वितीया विराड्गर्भा भुरिक् । ६ 'अवकोल्बा' इति द्विपदार्चीभुरिगनुष्टुप् । १० 'उन्मुञ्चन्तीः' इति पथ्यापंक्तिः । १२ 'मधुमन्मूलम्' इति पंचपदा विराडतिशक्वरी[4]ति ॥५॥

१४ 'वैयाघ्रो मणिः' इत्युपरिष्टान्निचृद्बृहती । २५ 'याव-

१. बी. प्रस्तारपंक्तिः । ह्विटने ने भी प्रस्तारपंक्तिः ही लिखा है। परन्तु टिप्पणि में बर्लिन मूल लेख से उसने भी आस्तारपंक्तिः पाठ उचित माना है।

२. क. बी. में इति है ङ. में नहीं।

३. बी. इति साष्टा विंशकम् ।

४. ङ. इति नहीं ।

तीनामोषधीनाम्' इति पथ्यापंक्तिः । २६ 'यावतीषु मनुष्याः' इति निचृत् । २८ उत् त्वाहार्षम्' इति भुरिक् ॥

८।८।१ 'इन्द्रो मन्थतु' इति चतुर्विशं भृग्वंगिरा ऐन्द्रमुत-वानस्पत्यं परं सेनाहननमानुष्टुभम् । २ पूतिरज्जुः' इति द्वे बृहत्यौ । पूर्वोपरिष्टाद् द्वितीया विराट् । ४ 'पुरुषानमून् इति बृहतीपुरस्तात् प्रस्तारपंक्तिः । ६ 'बृहद्धि जालम्' इत्यास्तार-पंक्तिः । ७ 'बृहत् ते' इति विपरीतपादलक्ष्मा चतुष्पदाति-जगतीति । ८ 'अयं लोकः' इति तिस्त्र उपरिष्टाद्बृहत्यः । ११ 'नयतामून्' इति पथ्याबृहती । परा भुरिक् । १९ 'परा जिताः' इति द्वे पुरस्ताद्बृहत्यौ । पूर्वा विराडुत्तरानिचृत् । २१ 'सं क्रोशताम्' इति त्रिष्टुप् । २२ 'दिशश्चतस्त्रः' इति चतु-ष्पदा शक्वरी । २३ 'संवत्सरो रथः' इत्युपरिष्टाद्बृहती । २४ 'इतो जयेतः' इति त्र्यवसाना त्रिष्टुबुष्णिग्गर्भा परा शक्वरी पञ्चपदा जगतीति[1] ॥६॥

८।९।१ 'कुतस्तौ' इति षड्विंशमथर्वा काश्यपेयमुत सर्वार्षं-छान्दसं त्रैष्टुभम् । २ 'यो अक्रन्दयत्' इति द्वे पंक्ती । द्वितीया-स्तारपंक्तिः । ४ 'बृहतः परि' इति द्वे अनुष्टुभौ । ८ 'यां प्रच्यु-ताम्' इति[2], ११ 'इयमेव' इति जगत्यौ । ९ 'अप्राणैति' इति भुरिक् । १२ 'छन्दःपक्षे उषसा', २२ 'इत्थं श्रेयः' इति जगत्यौ । १४ 'अग्नीषोमावदधुः' इति चतुष्पदातिजगती । २३ 'अष्टेन्द्रस्य' २५ 'को नु गौः' इति द्वे अनुष्टुभ इति[3] ॥७॥

८।१०। पर्याय १ ।

८।१०।१ विराड्वा' प्रभृतिर्वस्योभूयायां तांस्त्रयस्त्रिशत्सप्त-

---

१. ङ. इति नहीं ।
२. ङ. इति नहीं ।
३. क. ङ इति नहीं तथा अन्य लेखों में पाठ 'भाविति' हैं ।

शतं पर्यायमन्त्रानथर्वाचार्योऽपश्यत् । [3]तत्र १ 'विराड्वा' इति षट् पर्याया विराड्देवत्यास्तत्राद्यं त्रयोदशकम् । प्रथमा त्रिपदार्चीपंक्तिः । २ 'सोदक्रामत्' इति षड्याजुषीजगत्यः । ३ 'गृहमेधी', ६ 'यन्त्यस्य सभाम्' इति साम्न्यनुष्टुभौ । ५ 'यन्त्यस्य देवाः' आर्च्यनुष्टुप् । ७ 'यज्ञर्तो', १३ 'यन्त्यस्यामन्त्रणं', विराड्गायत्र्यौ । ११ 'यन्त्यस्य समितिम्' इति साम्नीबृहतीति ॥८॥

८।१०। पर्य्याय २ ।

[2]१ 'सान्तरिक्षे' इति दशकमाद्या त्रिपदा ९ 'ओषधीरेवास्मै' इति साम्न्यनुष्टुभौ । २ 'तां देवमनुष्याः' उष्णिग्गर्भा चतुष्पदो परिष्टाद्विराड्बृहती । ३ 'तामुप' इत्येकपदा याजुषीगायत्री । ४ 'ऊर्ज एहि', एकपदा, ७ 'ओषधीरेव' इति साम्नां पंक्ती । ५ 'तस्या इन्द्रः' विराड्गायत्रो । ६ 'बृहच्च रथन्तरं च' आर्च्यनुष्टुप् । ८ 'अपो वामदेव्येन' आसुरी गायत्री । १० 'अपो वामदेव्यम्' साम्नांबृहतीति ॥९॥

८।१०। पर्य्याय ३ ।

१ 'सा वनस्पतीन्' इत्यष्टौ । प्रथमा चतुष्पदा विराडनुष्टुप् । २ 'तस्माद् वनस्पतीनाम्' आर्चीत्रिष्टुप् । ३ 'सा पितॄन्' इति तिस्रः चतुष्पादः प्राजापत्याः पंक्तयः । ४ 'तस्मात् पितृभ्यः', ६ 'देवेभ्यः', ८ 'मनुष्येभ्यः' इति तिस्र आर्चीबृहत्यः ॥

---

१. शंकरपाण्डुरङ्ग ने भी सर्वानुक्रमणिका के आधार से सायण भाष्य में इस काण्ड के १५ सूक्त बनाये हैं परन्तु औरों ने इसके सूक्त १० स्वीकार करके शेषों को पर्य्याय रूप से इसके अन्तर्गत ही दिया है। हमने भी पर्य्याय सूक्तान्तंगत ही रखा है।

२. इस प्रकार का प्रतीकोद्धरण क्रम अथर्व में जो है वह विस्तार रूप से पंचपटलिका १।१ में देखो।

३. शं. पा० ने सायणभाष्य भू० पृ० १६ में पंक्तिः पाठ दिया है।

८।१०। प० ४ ।

[1] १ 'सासुरान्' इति द्वे षोडशके । तत्राद्या ५ 'सापितृन्' । ५।१ 'सा देवान्', ५।१३ 'सा सर्पान्' इति चतुष्पादः साम्नांजगत्यः । २ 'तस्या विरोचनाः', ६ 'यमः', १० 'मनुः', ५।१० 'कुबेरः', ५।१४ 'तक्षकः' इति साम्नां बृहत्यः । ५।१ 'तां देवाः', ३ 'तां द्विमूर्धा' इति साम्न्युष्णिहौ । ४ 'तां मायाम्', ८ 'स्वधाम्', ५।४ 'ऊर्जाम्', ५।१६ 'तद्विषम्' इत्यार्च्यनु[2]ष्टुभः । ७ 'तामन्तकः' आसुरी गायत्री । ९ 'सा मनुष्यान्', १३ 'सा सप्तर्षीन्', ५।९ 'सेतरजनान्' इति चतुष्पाद उष्णिहः । ११ 'तां पृथी' प्राजापत्यानुष्टुप् । १२ 'ते कृषिं', १६ 'तद् ब्रह्म', ५।८ 'तं पुण्यम्' इत्यार्च्यौ त्रिष्टुभः । १४ 'तस्याः सोमः', ५।२ 'इन्द्रः' इति साम्न्युष्णिहौ । १५ 'तां बृहस्पतिः', ५।७ 'वसुरुचिः' ५।११ 'रजतनाभिः' इति विराड्गायत्र्यः ॥१०॥

५ 'सा गन्धर्वाप्सरसः' इति चतुष्पदा प्राजापत्या जगती । ६ 'तस्याश्चित्र रथः' साम्नां बृहती त्रिष्टुप् । १२ 'तां विरोधाम्' त्रिपदा ब्राह्मीभुरिग्गायत्री । १५ 'तां धृतराष्ट्रः' साम्न्यनुष्टुबिति ।

८।१०। प० ६ ।

१ 'तद् यस्मा' इति चतुष्कमाद्याविराड्गायत्री । २ 'न च' इति साम्नां त्रिष्टुप् । ३ 'यत् प्रत्याहन्ति' इति प्राजापत्यानुष्टुप् । ४ 'तां विषमेव' इत्यार्च्युष्णिक् । इहानुक्तपादा द्विपदा इति ॥११॥ 

---

१. इस में ४ तथा ५ पर्यायों के उदाहरण हैं । ४ के उदाहरणों में केवल मन्त्र संख्या चिह्न ही दे दिया है और पञ्चम का (५) अंक देकर मन्त्र संख्या दी है ।

२. ढ. बी. अनुष्टुप् ।

३. क. में यह पर्याय छूट गया है ।

# †अथ नवमं काण्डम्

६।१।१ 'दिवस्पृथिव्याः' इति चतुर्विंशर्चमथर्वा । मधुदेवत्यमाश्विनं त्रैष्टुभम् । द्वितीया त्रिष्टुब्गर्भापंक्तिः । ३ 'पश्यन्त्यस्याः' इति परानुष्टुप् । ६ 'कस्तम्', ७ 'स तौ' इति यवमध्ये महाबृहत्यौ । पूर्वातिशाक्वरगर्भोत्तरातिजागतगर्भा । ८ 'हिङ्करिक्रतो' इति बृहतीगर्भा संस्तारपंक्तिः । १० 'स्तनयित्नुस्ते' इति परोष्णिक्पंक्तिः । ११ 'यथा सोमः प्रातःसवने' इति तिस्रः, [1]१५ 'सं माग्ने' इति द्वे, १८ 'यद्गिरिषु' इति द्वे अनुष्टुभः । १४ 'मधु जनिषीय' इति पुर उष्णिक् । १७ 'यथा मक्षा' इत्युपरिष्टाद्विराड्बृहती । २० 'स्तनयित्नुस्ते' इति भुरिग्विष्टारपंक्तिः । २१ 'पृथिवी दण्डः' इत्येकावसाना द्विपदार्च्यनुष्टुप् । २२ 'यौ वै कशायाः' इति त्रिपदा ब्राह्मी पुरउष्णिक् । २३ 'मधुमान् भवति' इति द्विपदार्चीपंक्तिः । २४ 'यद् वीध्रे' इति त्र्यवसाना षट्पदाष्टिरिति ॥१२॥

६।२।१ 'सपत्नहनम्' इति पंचविंशकं कामदेवत्यं त्रैष्टुभम् । ५ 'सा ते काम' इत्यतिजगती । ७ 'अध्यक्षः' इति जगती । ८ 'इदमाज्यम्' इति [2]त्रिपदार्चीपंक्तिः । ११ 'अवधीत् कामः' इति भुरिक् । [3]१२ 'तेऽधराञ्चः' इत्यनुष्टुप् । १३ 'अग्निर्यवः' इति द्विपदार्च्यनुष्टुप् । १४ 'असर्ववीरः' इति द्वे, १७ 'येन देवाः' इति द्वे, २१ 'यावतीर्दिशः' इति द्वे जगत्यः । २० 'यावती द्यावापृथिवी', २३ 'ज्यायान्' इति भुरिजौ । १६ 'यत् ते काम' इति चतुष्पदा शक्वरीगर्भा परा जगतीति ॥१३॥

---

†. यह लेख हमारा है ।

१. ६।१।१५ ऋ० १।२३।२४ में है, ऋषि 'मेधातिथि काण्व' है ।

२. हि० द्विपदा लिखा है ।  ३. ६।२।१२ अथर्व ३।६।७ में आ चुका है ।

६।३।१ 'उपमिताम्' इति चैकत्रिंशत्कम्, भृग्वंगिराः शाला-देवत्यमानुष्टुभम्। ६ 'यानि ते' इति पथ्यापंक्तिः। ७ 'हविर्धा-नम्' इति परोष्णिक्। १५ 'अन्तरा द्याम्' इति त्र्यवसाना पञ्चपदातिशक्वरी। १७ 'तृणैरावृता' इति प्रस्तारपंक्तिः। २१ 'या द्विपक्षा' इत्यास्तारपंक्तिः। २५ 'प्राच्या दिशः' [1]३१ 'दिशोदिशः' इति त्रिपादौ प्राजापत्या बृहत्यौ। २६ 'दक्षि-णाया दिशः' इति साम्नां त्रिष्टुप्। २७ 'प्रतीच्याः', २८ 'उदी-च्याः' २९ 'ध्रुवायाः', ३० 'ऊर्ध्वायाः', प्रतिष्ठा नाम गायत्र्य-स्त्रिपाद एताः सप्तैकावसाना इति ॥१४॥

६।४।१ 'साहस्रस्त्वेषः' इति चतुर्विंशकं ब्रह्मार्षभं त्रैष्टुभम्। ८ 'इन्द्रस्यौजः' इति भुरिक्। ९ 'सोमेन पूर्णम्', १० 'बृहस्पतिः सविता' इति जगत्यौ। ११'य इन्द्र [2]इव' इति सप्त, १९'ब्राह्म-णेभ्य ऋषभम्' इति द्वे, [3]२३ 'उपेहोपपर्चन' इत्यनुष्टुभः। १८ 'शत याजम्' इत्युपरिष्टाद्बृहती। २१ 'अयं पिपानः' इत्यास्तारपंक्तिः। २४ एतं वो युवानम्' इति जगती॥

६।५।१ 'आ नय' इत्यष्टात्रिंशद्भृगुर्मन्त्रोक्ताजं पंचौदन-देवत्यं त्रैष्टुभम्। ३ 'प्रपदः' इति चतुष्पात् पुरोऽतिशक्वरी जगती। ४'अनु च्छ्य श्यामेन', १० 'अजस्त्रिनाके' इति जगत्या-विति[4] ॥१५॥

६।५।१४ 'अमोतम्', १७ 'येना सहस्रम्', २७ 'या पूर्वम्'

---

१. बी. यहां कुछ पाठ छूटा हुआ है।

२. बी. इव देवेष्विति।

३. ६।४।२३ ऋ० ६।२८।८ में बहु पाठ भेद से है।

४. ङ. इति नहीं।

इति [1]तिस्रोऽनुष्टुभः । ३० 'आत्मानं पितरम्' इति ककुम्मती । २३ 'नास्यास्थीनि' इति पुर उष्णिक् । १६ 'अजोसि' इति त्रिपादनुष्टुप् । १८ 'अजः पक्वः' इति [2]त्रिपाद्विराड्गायत्री । २४ 'इदमिदमेव' इति पञ्चपदानुष्टुबुष्णिग्गर्भोपरिष्टाद्बार्हता विराड्जगती । २० 'अजो वा इदमग्रे' इति तिस्रः' २६ 'पञ्च रुक्मा' इति पञ्चपदानुष्टुबुष्णिग्गर्भोपरिष्टाद्बार्हता भुरिजः[3] । ३१ 'यो वै नैदाघम्' इति सप्तपदाष्टिः । ३२ 'यो वै कुर्वन्तम्' इति चतस्रो दशपदाः प्रकृतयः । ३६ 'यो वा अभिभुवम्' इति दशपदाकृतिः । ३७ 'अजं च पचत' इति त्रिपाद्विराड्गायत्री । ३८'तास्ते रक्षन्तु' इत्येकावसाना द्विपदा साम्नांत्रिष्टुबिति ॥१६॥

९।६। प० १ ।

९।६।१ 'यो विद्यात्' इति षट् पर्य्याया ब्रह्मातिथ्या उत विद्यादेवत्यास्तत्र १ 'यो विद्यात्' [4]सप्तदश पूर्वाद्या नागीनाम-त्रिपाद्गायत्री । २ 'सामानि यस्य' त्रिपदार्षीगायत्री । ३ 'यद् वा अतिथिपतिः' ७ 'यदावसथान्' साम्नी त्रिष्टुभौ । ४ 'यदभि-वदति', ६ 'यदुपरिशयनम्' आर्च्यनुष्टुभौ । ५ 'या एव यज्ञ', आसुरी गायत्री । ६ 'यत् तर्पणं' त्रिपदा साम्नां जगती । ८'यदु-पस्तृणन्ति' याजुषीत्रिष्टुप् । १० 'यत् कशिपूपबर्हणम्' साम्नां-

---

१. गु० के विना अन्य क. ङ. बी. लेखों में चतस्रः ही पाठ है । गु० का पाठ शुद्ध है क्योंकि १४, १७, २७ में तीन ऋचायें हैं । जिनका अनुष्टुप् छन्द है चार ऋचायें नहीं ।

२. बी. में विराड् पद छूटा है ।

३. सब मूल लेखों में पाठ 'भुरिक्' है ।

४. यहां पाठ में परस्पर बहुत भेद है । क. "दश सप्तर्चोद्या नागीनामा" । ङ. में पाठ ऊपर के मूलवत् है, किन्तु नाम के पूर्व 'नागी' पद छूटा हुआ है । हमने मूल में बी. का पाठ दिया है ।

भुरिग्बृहती । ११ 'यदाञ्जनाभ्यञ्जनम्', १४ 'ये व्रीहयः' इति तिस्रः साम्न्यनुष्टुभः । १२ 'यत् पुरा' इति विराड्गायत्री । १३ 'यदशनकृतम्' साम्नीनिचृत्पंक्तिः । १७ 'स्रुग्दर्विः' त्रिपाद्विराड्भुरिग्गायत्रीति[1] ॥१७॥

६।६। प० २ ।

१ 'यजमान ब्राह्मणं वा' इति त्रयोदश । प्रथमा विराट्पुरस्ताद्बृहती । २ 'यदा ह भूयः', १२ 'प्रजापतेर्वा एषः' साम्नांत्रिष्टुभौ । ३ 'उप हरति' आसुर्यनुष्टुप् । ४ 'तेषामासन्नानाम्' साम्न्युष्णिक् । ५ 'स्रुचा हस्तेन', ११ 'प्राजापत्यो वा' इति साम्नां बृहत्यौ । द्वितीया भुरिक् । ६ 'एते वै प्रियाः' आर्च्यनुष्टुप् । [2]७ 'स य एवम्' इति त्रिपात्स्वराडनुष्टुप् । ९ 'सर्वो वा एषो जग्धपाप्मा' साम्न्यनुष्टुप् । १० 'सर्वदा वा एषः' त्रिपदार्चीत्रिष्टुप् । १३ 'योऽतिथीनाम्' त्रिपदार्चीपंक्तिरिति ॥१८॥

६।६। प० ३ ।

१ 'इष्टं च वा' इति नवकं प्रथमाः षट्, ९ 'एतद् वा उ स्वादीयः' इति त्रिपादः पिपीलिकमध्या गायत्र्यः । ७ 'एष वा अतिथिः' साम्नी बृहती । ८ 'आशितावती' इति पिपीलिकमध्योष्णिक् ॥

६।६। प० ४ । १ 'स य एवम्',

६।६। प० ५ । १ 'तस्मा उषा' इति द्वौ दशकौ ॥

६।४ प० । पूर्वस्याद्याश्चतस्रः १ 'स य एवम्' इति शब्द-

---

१. ङ. इति नहीं ।

२. क. ङ. में "स य एवं विद्वानिति पंचपदा विराट् पुरस्ताद्बृहती" पाठ है । इनका पाठ बी. से सर्वथा भिन्न है । वि० ने भी मूलवत् पाठ ऊपर देकर टिप्पणि में बलिनसंस्करण का पाठ दिया है ।

रूपाः प्राजापत्या अनुष्टुभः । ९ 'स य एवं विद्वानुदकम्' इति भुरिक् । २ 'यावदग्निष्टोमेन' इति चतस्रो [1]यावत्सर्वरूपास्त्रिपादोगायत्र्यः । १० 'प्रजानां प्रजननाय' इति चतुष्पात्प्रस्तारपंक्तिः ॥

६।५। उत्तरस्याद्या साम्न्युष्णिक् । २ 'बृहस्पतिरूर्जय' इति पुर उष्णिक् । ३ 'निधनं भूत्याः' साम्नां भुरिग्बृहती । ४ 'तस्मा उद्यन्', ६ 'तस्मा अभ्रः' ९ 'उपहरति' इति साम्न्यनुष्टुभः । ५ 'मध्यंदिन' त्रिपदा निचृद्विषमा नाम गायत्री । ७ 'विद्योतमानः' त्रिपदा विराड्विषमा नाम गायत्री । ८ 'अतिथीन् प्रति' इति त्रिपाद्विराडनुष्टुबिति ॥१९॥

६।६। प० ६ ।

१ 'यत् क्षत्तारम्' इति चतुर्दशकं पूर्वासुरीगायत्री । २ 'यत् प्रतिश्रृणोति' साम्न्यनुष्टुप् । ३ 'यत् परिवेष्टारः', ५ 'यद् वा अतिथिपतिः' [2]त्रिपदे आर्चीपंक्ति । ४ 'तेषां न' इत्येकपदा प्राजापत्या गायत्री । ६ 'यत् सभागयति' इति षडाच्यो बृहत्यः । १२ 'स उपहूतः' एकपदासुरी जगती । १३ 'आप्नोतीमम्' याजुषी त्रिष्टुप् । १४ 'ज्योतिष्मतः' एकपदासुर्युष्णिक् ॥

६।७।१ 'प्रजापतिश्चै[3]कः' षड्विंशो गव्यः । आद्यार्चीबृहती । २ 'सोमो राजा' आर्च्युष्णिक् । ३ 'विद्युज्जिह्वा', ५ 'श्येनः क्रोडः' आर्च्यनुष्टुभौ । ४ 'विश्वं वायुः', १४ 'नदी सूत्री',

---

१. शं. पा. यावच्छन्दरूपा । क. यावच्छत्ररूपा, बी पाठ पढ़ा नहीं जाता । हम ने ङ. का पाठ दिया है ।

२. ङ. बी. त्रिपदा आर्ची ।

३. अथर्व संहिता में पाठ 'प्रजापतिः' मात्र है उसके आगे 'चैकः' नहीं परन्तु समग्र मूल लेखों में प्रजापतिश्चैकः है अतः यह पाठ विचारणीय है ।

१५ 'विश्वव्यचाः', १६ 'देवजना' इति साम्नां बृहत्यः । ६ 'देवानां पत्नीः' ८ 'इन्द्राणी' आसुरी गायत्र्यौ । ७ 'मित्रश्च' त्रिपदा पिपीलिकमध्यानिचृद्गायत्री । ९ 'ब्रह्म च', १३ 'क्रोधो वृक्कौ' साम्नां गायत्राविति[1] ॥२०॥

१० 'धाता च' इति पुर उष्णिक् । ११ 'चेतो हृदयम्', १२ 'क्षुत्कुक्षिः', १७ 'रक्षांसि लोहितम्', २५ 'एतद्वै' इति साम्न्युष्णिहः । १८ 'अभ्रं पीबः', २२ 'तृणानि प्राप्तः' एकपदे आसुरीजगत्यौ । १९ 'अग्निरासीनः' एकपदासुरोपंक्तिः । २० 'इन्द्रः प्राङ्तिष्ठन्' याजुषीजगती । २१ 'प्रत्यङ्तिष्ठन्' आसुर्यनुष्टुप् । २३ 'मित्र ईक्षमाणः' एकपदासुरो बृहती । २४ 'युज्यमानः' साम्नां भुरिग्बृहती । २६ 'उपैनम्' साम्नीत्रिष्टुप् । इहानुक्तपादा द्विपदा इति ॥२१॥

९।८।१ 'शीर्षक्तिं शीर्षाम[2]यम्' इति द्वाविंशकम् । भृग्वंगिरा अनुष्टुबनेन सर्वशीर्षामयां द्यामयमुपाकरोत् । १२ उदरात् ते' इत्यनुष्टुब्गर्भा ककुम्मती चतुष्पादुष्णिक् । १५ 'याः पार्श्वे' इति विराडनुष्टुप् । २१ 'पादाभ्यां ते' इति विराट्पथ्या बृहती । २२ 'सं ते शीर्ष्णः' इति पथ्यापंक्तिः ॥

९।९।[3] १ 'अस्य वामस्य' इति द्वाविंशकं वामीयम् । ब्रह्मादित्यदेवत्यं त्रैष्टुभमध्यात्मकरम् । १२ 'पञ्चपादं', १४ 'सनेमि', १६ 'साकंजानां', १८ 'अवः परेण पितरम्' इति जगत्यः ॥

---

१. क. ङ. इति नहीं ।

२. बी. सर्वशीर्षमिति । किसी मूल लेख से भी अर्थ बहुत स्फुट नहीं होता मूल पाठ घ के आधार से दिया है ।

३. ९।९ सूक्त ऋ० १।१६४ सूक्त में आता है, ऋषि दीर्घतमा है ।

६।१०। [1]१ 'यद् गायत्रे' इत्यष्टाविंशकम् । गोविराडध्यात्मदेवत्यं त्रैष्टुभम् । आद्या, ७ 'अयं स', १४ 'इयं वेदिः, १७ 'सप्तार्धगर्भा' इति द्वे जगत्यः । [2]२१ 'गौरिन्मिमाय' इति पञ्चपदातिशक्वरी । तथा २३ 'अपादेति' मैत्रावरुणौ, २४ 'विराड्वाग्' इति चतुष्पदा पुरस्कृतिर्भुरिगतिजगती । २ 'गायत्रेणप्रति', २६ 'त्रयः केशिनः इति द्वे भुरिज इति ॥२२॥

इति श्री ब्रह्मवेदोक्तमन्त्राणां बृहत्सर्वानुक्रमणिकायां षष्ठः पटल' समाप्तः ॥



१. ६।१०।६, १६, २३ तथा २४ मन्त्रों के विना शेष सब मन्त्र इस सूक्त के ऋ० १।१६४ सूक्त में मिलते हैं, ऋषि दीर्घतमा है । इसका ६वां मन्त्र ऋ० १०।५५।५ में है, ऋषि बृहदुक्थः वामदेव्यः है । और मन्त्र २३ ऋ० १।१५२।३ में है ऋषि दीर्घतमा है ।

२. क. ङ. 'मिमाय' नहीं ।

# ‡अथ दशमं काण्डम्

१०।१।१ ॐ 'यां कल्पयन्ति' द्वात्रिंशत् प्रत्यंगिरसः। कृत्या दूषणदेवत्यमानुष्टुभमाद्या महाबृहती। २ 'शीर्षण्वती' इति विराण्नाम गायत्री। ६ 'ये त्वा' इति पथ्यापंक्तिः। १२ 'देवैनसात्' इति पंक्तिः। १३ 'यथा वातः' इत्युरोबृहतीति। १५ 'अयं पन्थाः' इति चतुष्पदा विराड्जगती। १७ 'वात इव', २० 'स्वायसा' इति प्रस्तारपंक्तिर्द्वितीया विराट्। १६ 'पराक् ते', १८ 'यां ते बर्हिषि' इति त्रिष्टुभौ। १९ 'उपाहृतम्' इति चतुष्पदा जगती। २२ 'सोमो राजा' इत्येकावसाना, द्विपदार्च्युष्णिक्। २३ 'भवशर्वौ' इति त्रिपदा भुरिग्विषमा गायत्री। २४ 'यद्येयथ' इति प्रस्तारपंक्तिः। २८ 'एतद्धि' इति त्रिपदा गायत्री। २९ 'अनागोहत्या' इति मध्येज्योतिष्मती जगती। ३२ 'यथा सूर्यः' इति द्व्यनुष्टुब्गर्भा पञ्चपदातिजगतीति ॥१॥

१०।२।१ 'केन पार्ष्णी' इति त्रयस्त्रिंशत् पार्ष्णीसूक्तं नारायणः। पौरुषमानुष्टुभमाद्याश्चतस्रो, ७ 'हन्वोर्हि' इति द्व त्रिष्टुभः। ६ 'कः सप्त खानि', ११ 'को अस्मिन्नापः' इति जगत्यौ। २८ 'ऊर्ध्वो नु सृष्टाः' इति भुरिग्बृहती। इदं ब्रह्मप्रकाशिसूक्तम्। ३१ 'अष्टाचक्रा' इति द्वे साक्षात् पर ब्रह्मप्रकाशिन्याविति ॥

१०।३।१ 'अयं मे वरणः' इति पञ्चविंशकमथर्वामन्त्रोक्तवरणदेवत्यमुत वानस्पत्यं चान्द्रमसमानुष्टुभम्। २ 'प्रैणान् छृणीहि' इति द्वे, ६ 'स्वप्नं सुप्त्वा' इति भुरिक्त्रिष्टुभः। ८ 'यन्मे माता' इति पथ्यापंक्तिः। ११ 'अयं मे वरणः', १६ 'तां-

‡. यह लेख हमारा है।

स्त्वम्' इति भुरिजौ। १३ 'यथा वातो वनस्पतीन्' इति द्वे पथ्यापंक्ती। १४ 'यथा वातः' इति १७ 'यथा सूर्यः' इति प्रभृति २५ 'यथा देवेष्वमृतम्' इति षट्पदा दश जगत्य इति ॥२॥

१०।४।१ 'इन्द्रस्य प्रथमः' इति षड्विंशतिः। गरुत्मान् तक्षकदैवतमानुष्टुभम्। आद्या पथ्यापंक्तिः। २ 'दर्भः शोचिः' इति त्रिपदा यवमध्यागायत्री। ३ 'अव श्वेत' इति द्वे पथ्याबृहत्यौ। ८ 'संयतम्' इत्युष्णिग्गर्भा परा त्रिष्टुप्। १२ 'नष्टासवः' इति भुरिग्गायत्री। १६ 'इन्द्रो [1]मेहिम्' इति त्रिपदा प्रतिष्ठागायत्री। २१ 'ओषधीनामहम्' इति ककुम्मती। २३ 'ये अग्निजा' इति त्रिष्टुप्। २६ 'आरे अभूत्' इति त्र्यवसाना षट्पदा बृहतीगर्भाककुम्मती भुरिक्त्रिष्टुबिति ॥३॥

१०।५। [2]१ 'इन्द्रस्यौज' इति चतुर्विंशतिः सिन्धुद्वीपः। आप्यमुतचान्द्रमसमानुष्टुभमाद्या पञ्च त्रिपदाः, पुरोऽभिकृतयः ककुम्मतीगर्भाः पंक्तयः। ६ 'विश्वानि मा' इति चतुष्पदा जगतीगर्भा जगती। ७ 'अग्नेर्भाग स्थ' इत्यष्टौ त्र्यवसानाः पंचपदा विपरीतपादलक्ष्मा बृहत्यः। ११ तत्र 'मित्रावरुणयोः' १४ 'देवस्य सवितुः' इति [3]द्वे पथ्यापंक्ती। १५ 'यो व आपोपां भागः' इति सप्त चतुरवसाना दशपदा मन्त्रोक्तदेवत्यास्त्रैष्टुब्गर्भा अति-

---

१. आदर्श पुस्तकों में पाठ 'इन्द्रे मेहीति' है परन्तु मूलसहिता में 'मेहिम्' पाठ जान हमने स्वयं पाठ शुद्ध किया है।

२. अथर्व संहिता में यह सूक्त ५० मन्त्रों का है। अनुक्रमणी में यहां २४ मन्त्रों का भिन्न सूक्त है। शेष अवान्तर सूक्तों के मन्त्रों को साथ मिलाकर ये ५० ऋचाओं वाला सूक्त बनाया है। हम अनुक्रमणी के अनुकूल भिन्न-भिन्न सूक्त देंगे।

३. 'द्वे' से १५ मन्त्र ग्रहण करना ठीक नहीं क्योंकि इसका छन्द भिन्न कहा है अतः यह पद चिन्तनीय है। पंक्ती का द्विवचनरूप हमारा है। मूल में पंक्तिः पद है।

धृतयः । तत्र १६ 'हिरण्यगर्भः', २० 'पृश्निः' इति[1] कृती । २४ 'अरिप्रा आपः' इति त्रिपाद्विराड्गायत्री ॥

१०।६। [2]१(२६) 'विष्णोः क्रमोसि' इत्येकादश त्र्यवसानाः कौशिका विष्णुक्रमदेवत्या उत प्रतिमन्त्रोक्तदेवत्याः षट्पदा यथाक्षरंशक्वर्यतिशक्वर्यौ (३६) १ 'जितमस्माकम्' इति मार्वी पञ्चपदातिशाक्वरातिजागतगर्भाष्टिः ॥

१०।७।(३७) १ 'सूर्य्यस्यावृतम्' इति पञ्च ब्रह्मा प्रतिमन्त्रोक्तदेवत्याः । प्रथमा विराट्पुरस्ताद्बृहती । (३८) २ 'दिशो ज्योतिष्मतीः' इति पुर उष्णिक् । (३९) ३ 'सप्त ऋषीन्', (४१) ५ 'ब्राह्मणान्' इति [3]द्वे आर्षीगायत्र्यौ । (४०) ४ 'ब्रह्माभ्या' इति विराड्विषमागायत्री ॥४॥

१०।८। (४२) १ 'यं वयम्' इति नवर्चं विहव्यः प्राजापत्या अनुष्टुभः । (४४) ३ 'राज्ञो वरुणस्य' इति त्रिपाद्गायत्रीगर्भानुष्टुप् । (५०) ९ 'अपामस्मै' इति त्रिष्टुप् ॥

१०। [4]६ (६) १ 'अरातीयोः' इति पञ्चर्चात्रिंशद्बृहस्पतिः । मन्त्रोक्तफालमणिदेवत्यमुत वानस्पत्यमानुष्टुभम् । आद्या, ४ 'हिरण्यस्रक्' इति गायत्र्यौ । ३ 'यत् त्वा शिक्वः' इत्याप्या । ५ 'तस्मै घृतम्' इति षट्पदा जगती । ६ 'यमबध्नात् बृहस्पतिर्मणिम्' इति प्रथमा सप्तपदा विराट्शक्वरी । ७ 'तमिन्द्रः' इति

---

१. 'कृती' यह द्विवचन रूप भी हमारा है। मूल पुस्तकों में पाठ कृतिः है।

२. १०।५ सूक्त क्रम में यह मन्त्र २६ वां है। भिन्न सूक्त क्रम में प्रथम। अथर्व संहिता में जो १०।५ सूक्त ५० ऋचाओं का है उसके अनुक्रमणिका के अनुसार ४ सूक्त भिन्न-भिन्न बने हैं। संहिता का मन्त्र क्रम भी साथ हमने बंधनी में दे दिया है।

३. यहां भी 'द्वे' पद चिन्तनीय है।

४. प्रकाशित संहिता क्रम बन्धनी में दिया है।

चतस्रस्त्र्यवसाना अष्टपदा अष्टयः, अन्त्या नवपदा धृतिः। ११ 'बृहस्पतिर्वाताय' इति पथ्यापंक्तिः। १२ 'तेनेमां मणिना कृषिम्' इति षट् त्र्यवसानाः षट्पदाः शक्वर्यः। २० 'अथर्वाणो अबध्नत' इति पथ्यापंक्तिः। २१ 'तं धाता' इति गायत्री। २३ 'अगमत् सह गोभिः' इति पञ्च पथ्यापंक्तयः। ३१ 'उत्तरं द्विषत' इति त्र्यवसाना षट्पदा जगती। ३५ 'एतमिध्म' इति पंचपदा [1]त्र्यनुष्टुब्गर्भाजगतीति ॥५॥

१०।१० [७] १ 'कस्मिन्नङ्गे' इति चतुश्चत्वारिंशदथर्वा क्षुद्रो मन्त्रोक्तस्कम्भोऽध्यात्मदेवत्यंत्रैष्टुभम्। प्रथमा विराड्जगती। २ 'कस्मादङ्गाद् दीप्यते', ८ 'यत्परममवमम्' इति भुरिजौ। ७'यस्मिन्त्स्तब्ध्वा' इति परोष्णिक्। १०'यत्र लोकान्' इत्युपरिष्टाद्बृहती। ११'यत्र तपः' इति द्वे, १५ 'यत्रामृतञ्च', २० 'यस्मादृचः' इत्युपरिष्टात्ज्योतिर्जगत्यः। १३ 'यस्य त्रयस्त्रिंशद् देवा अङ्गे सर्वे' इति परोष्णिक्। १४'यत्रऋषयः', १६ 'यस्य चतस्रः, १८ 'यस्य शिरः', द्वे उपरिष्टाद्बृहत्यः। १७ 'ये पुरुषे' इति त्र्यवसाना षट्पदा जगती। २१ 'असच्छाखाम्' इति बृहतीगर्भानुष्टुप्। २२ 'यत्रादित्यश्च' इत्युपरिष्टाज्ज्योतिर्जगती। २३ 'यस्य त्रयस्त्रिंशद्देवा निधिम्' इत्यष्टावनुष्टुभ[2] इति ॥६॥

३१ 'नाम नाम्ना' इति मध्येज्योतिर्जगती। ३२ 'यस्य भूमिः' ३४ 'यस्य वातः', ३६ 'यः श्रमात्' इत्युपरिष्टाद्विराड्बृहत्यः। ३३ 'यस्य सूर्यः' इति [3]परा विराडनुष्टुप्।

---

१. क. ङ. त्र्यनु पढ़ा जाता है, बी. में 'पदानु' लिखा है। ह्वि० ने भी त्र्यनुष्टुब्गर्भा पाठ लिखा है।

२. क. ङ. इति नहीं। ३. क. ङ. ह्वि पर।

३५ 'स्कम्भो दाधार' इति चतुष्पदा जगती । ३७ 'कथं वातः', ४० 'अप तस्य' इत्यनुष्टुभौ । ३८ 'महद्यक्षम्' इति त्रिष्टुप् । ३९ 'यस्मै हस्ताभ्याम्' इत्युपरिष्टाज्ज्योतिर्जगती । ४१ 'यो वेतसम्' इत्यार्षी त्रिपाद्गायत्री । ४२ 'तन्त्रमेके' इति द्वे त्रिष्टुभौ । ४४ 'इमे मयूखाः' इत्येकावसाना पंचपदा निचृत्पदपंक्तिराच्यर्यनुष्टुप्, द्विपदा वा पंचपदा निचृत्पदपंक्तिरिति ॥७॥

१०।११ [८] १ 'यो भूतम्' इति चतुश्चत्वारिंशत्' कुत्सोऽध्यात्मदेवत्यं त्रैष्टुभम् । आद्योपरिष्टाद्विराड्बृहती । २ 'स्कम्भेनेमे' इति बृहतीगर्भानुष्टुप् । ५ 'इदं सवितः' इति भुरिगनुष्टुप् । ६ 'आविः सन्निहितम्' इत्यनुष्टुप् । ७ 'एक चक्रम्' इति पराबृहती । १० 'या पुरस्तात्' इत्यनुष्टुब्गर्भा । ११ 'यदेजति' इति जगती । १२ 'अनन्तं विततम्' इति पुरोबृहती त्रिष्टुब्गर्भार्षी-पंक्तिः । १४ 'ऊर्ध्वं भरन्तम्', १९ 'सत्येन' इति द्वे' अनुष्टुभः । १५ 'दूरे पूर्णेन' इति भुरिग्बृहती । २१ 'अपादग्रे', २३ 'सनातनम्', २५ 'बालादेकम्', २९ 'पूर्णात्पूर्णम्' इत्यनुष्टुभः । २२ 'भोग्यः' इति पुर उष्णिक् । २६ 'इयं कल्याणि' इति द्व्युष्णिग्गर्भानुष्टुप् । २७ 'त्वं स्त्री' इति भुरिग्बृहती । ३० 'एषा सनत्नी' इति भुरिक् । ३१ 'अविर्वै नाम' इति चतस्रः, ३७ 'यो विद्यात् सूत्रम्' इति द्वे, ४१ 'उत्तरेणेव', ४३ 'पुण्डरीकं नवद्वारम्' इत्यनुष्टुभः । ३९ 'यदन्तरा द्यावापृथिवी' इति बृहतीगर्भा । [1]४२ 'निवेशनः' इति विराड्गायत्रीति ॥८॥

१०।१२ [९] १ 'अघायताम्' इति सप्तविंशतिरथर्वामन्त्रोक्तशतौदनदेवत्यमानुष्टुभम् । आद्यात्रिष्टुप् । १२ 'ये देवाः' इति

१. १०।८।४२ ऋ० १०।१३९।३ में अल्प भेद से आया है ऋषि विश्वावसुर्देवगन्धर्व है ।

पथ्यापंक्तिः । २५ 'क्रोडौ ते स्ताम्' इति द्व्युष्णिग्गर्भानुष्टुप् । २६ 'उलूखले मुसले' इति पंचपदा बृहत्यनुष्टुबुष्णिग्गर्भा जगती । २७ 'अपो देवीः' इति पञ्चपदातिजागतानुष्टुब्गर्भाशक्वरी ॥

१०।१३ (१०)१ 'नमस्ते जायमानायै' इति चतुस्त्रिंशत्कश्यपो मन्त्रोक्तवशादेवत्यमानुष्टुभमाद्या ककुम्मती । ५ 'शतं कंसाः' इति पञ्चपदातिजागतानुष्टुभं स्कंधोग्रीवीबृहती । ६ 'यज्ञपदीः', ८ 'अपस्त्वम्', १० 'यदन्नूचो' इति विराजः । २३ 'सर्वं गर्भात्' इति बृहती । २४ 'युध एकः' इत्युपरिष्टाद्बृहती । २६ 'वशामेव' इत्यास्तार पंक्तिः । २७ 'य एवं विद्यात्' इति शङ्कुमती । २९ 'चतुर्धा रेतः' इति त्रिपदा विराड्गायत्री । ३१ 'वशाया दुग्धं पीत्वा' इत्युष्णिग्गर्भा । ३२ 'सोममेनाम्' इति विराट्पथ्या बृहती ॥६॥



# अथैकादशं काण्डम्

११।१।१ 'अग्ने जायस्व' इति सप्तत्रिंशद्ब्रह्मौद[1]निकम्, त्रैष्टुभमाद्यानुष्टुब्गर्भाभुरिक्पंक्तिः। २ 'कृणुत धूमम्' इति बृहतोगर्भाविराट्। ३ 'अग्ने जनिष्ठा' इति चतुष्पदा शाक्वरगर्भाजगती। ४ 'समिद्धो अग्ने' इति भुरिक्। ५ 'त्रेधा भागः' इति बृहतीगर्भा विराट्। ६ 'अग्ने सहस्वान्' इत्युष्णिक्। ८ 'इयं महो' इति विराड्गायत्री। ९ 'एतौ ग्रावाणौ' इति शाक्वरातिजागतगर्भा[2] जगती। १० 'गृहाण ग्रावाणौ' विराट्पुरोऽतिजगती विराड्जगती। ११ 'इयं ते धीतिः' इति जगती। १५ 'ऊर्जो भागः' इति द्वे भुरिजौ। १७ 'शुद्धाः पूताः' इति विराड्जगती। १८ 'ब्रह्मणा शुद्धाः' इत्यतिजागतगर्भा परातिजागताविराडतिजगती। २० 'सहस्रपृष्ठः' इत्यतिजागतगर्भा[3] परा शाक्वरा चतुष्पदा भुरिग्जगती ॥१०॥

२१ 'उदेहि वेदिम्' इति, २४ 'अदितेर्हस्ताम्' इति तिस्रो, २६ 'अग्नौ तुषान्' इति विराड्जगत्योऽन्त्या भुरिक्। २७ 'शुद्धाः पूताः' इत्यतिजागतगर्भा[4] जगती। ३१ 'बभ्रोरध्वर्यो' इति भुरिक्। ३५ 'वृषभोसि' इति चतुष्पात् ककुम्मत्युष्णिक्। ३६ 'समाचिनुष्व' इति पुरोविराट् व्याघ्रादिष्ववगंतव्या। ३७ 'येन देवाः' इति विराड्जगती ॥

११।२।१ 'भवाशर्वौ मृडतम्' इत्येकत्रिंशदर्थवा मन्त्रोक्तरुद्रदेवतं त्रैष्टुभम्। या यद्देवत्येति पारिभाषिकमनुस्मर्यते सर्वत्र। आद्या परातिजागताविराड्जगती। २ 'शुने क्रोष्ट्रे' इत्यनुष्टुब्गर्भा

---

१. ङ. बी' दनीकं'।
२. ङ. 'गर्भानुजगती'।
३. क. गु. 'पर'।
४. बी. गर्भा भुरिग्जगती।

पञ्चपदा तथा जगती । ३ 'ऋन्दाय ते' इति चतुष्पात्स्वराडुष्णिक् । ४ 'पुरस्तात् ते' इति द्वे, ७ 'अस्त्रा नीलशिखण्डेन' इत्यनुष्टुभः । ६ 'अङ्गेभ्यस्ते' इत्यार्षीगायत्री । ८ 'स नो भव' इति महाबृहती । ९ 'चतुर्नमः' इत्यार्षी । १० 'तव चतस्रः' इति पुरः कृतिस्त्रिपदा विराडिति ॥११॥

११ 'उरुः कोशः' इति पञ्चपदा विराड्जगतीगर्भा शक्वरी । १२ 'धनुर्बिभर्षि' इति भुरिक् । १३ 'योऽभियातः', १५ 'नमस्ते' इति द्वे अनुष्टुभः[1] । १४ 'भवारुद्रौ', १७ 'सहस्राक्षमतिपश्यम्' इति तिस्रो विराड्गायत्र्यः[2] । २० 'मा नो हिंसीः' इति भुरिग्गायत्री । २१ 'मा नो गोषु' इत्यनुष्टुप् । २२ 'यस्य तक्मा' इति विषमपादलक्ष्मा[3] त्रिपदा महाबृहती । २३ 'योऽन्तरिक्षे', २६ 'मा नो रुद्र' इति द्वे विराड्गायत्र्यः[4] । [5]२९ 'मा नो महान्तम्', २४ 'तुभ्यमारण्याः' इति जगत्यौ । २५ 'शिशुमाराः' इति[6] पञ्चपदाति शक्वरी । ३० 'रुद्रस्यैलबकारेभ्यः' इति चतुष्पादुष्णिक् । ३१ 'नमस्ते घोषिणीभ्यः' इति त्र्यवसाना विपरीतपादलक्ष्मा षट्पादिति[7] ॥१२॥

११।३। प० १

१ 'तस्यौदनस्य' इति त्रयः पर्यायास्तत्र पूर्वमेकत्रिंशद् बार्हस्पत्यौदनदेवत्याः । १४ 'ऋचा कुम्भी' इत्यासुरी गायत्र्यौ । २ 'द्यावापृथिवी श्रोत्रे' इति त्रिपदा समविषमा गायत्री । ३ 'चक्षुर्मुसलम्', ६ 'कब्रु फलीकरणाः', १० 'आन्त्राणि' इत्यासुरीपंक्तयः ।

---

१. ङ. 'भौ' । २. ङ. त्र्यौ ।
३. क. ग. लक्ष्मा । ङ. ह्वि० लक्ष्म्या । ४. ङ त्र्यौ ।
५. ११।२।२९ ऋ० १।११४।७ में है ऋषि कुत्सआंगिरस है
६. ङ. गु. में इति के आगे द्वे पाठ अधिक है ।
७. ह्वि० में इति के आगे जगती पाठ दिया है ।

४ 'दितिः शूर्पं', ८ 'त्रपु भस्म' साम्न्यनुष्टुभौ । ५ 'अश्वाः कणाः', १३ 'ऋतं हस्तावनेजनं', १५ 'ब्रह्मणा परिगृहीता', २५ 'यावद् दाता' साम्न्युष्णिहः । ७ 'श्यामस्मयः', १९ 'ओदनेन' इति चतस्रः प्राजापत्यानुष्टुभः । ९ 'खलः पात्रं', १७ 'ऋतवः' इति द्वे आसुर्यनुष्टुभः । ११ 'इयमेव पृथिवी' इति भुरिगार्च्यनुष्टुप् । १२ 'सीताः पर्शवः' इति याजुषीजगती । १६ 'बृहदायवनम्', २३ 'स य ओदनस्य' इत्यासुरीबृहत्यौ । २४ 'नाल्प' इति त्रिपदा प्राजापत्या बृहती । २६ 'ब्रह्मवादिनः' इत्यार्च्युष्णिक् । २७ 'त्वमोदनम्' इति साम्नीबृहती, द्वितीया भुरिक् । ३० 'नैव' इति याजुषीत्रिष्टुप् । ३१ 'ओदन एव' अल्पशः पंक्तिरुत याजुषीति ॥१३॥

११।३। प० २ ।

[1] १ 'ततश्चैनम्' इति द्वासप्ततिर्मन्त्रोक्तदेवत्याः । प्रथमा सर्वाग एव । ३८ 'एनमन्यैः प्राणापानैः', ४१ 'अन्येनोरसा' इति च साम्नी त्रिष्टुभौ[2] । ३२ 'ज्येष्ठतः' 'तं वा अहं', ताभ्यामेनं ३५ 'मुखतस्ते', ४२ 'उदरदारः', एकपदा[3] आसुरी गायत्र्यः । ३२ 'बृहस्पतिना' ४३ 'समुद्रेण' इति दैवीजगत्यौ । ३५ 'तेनैनं', ३६ 'तयैनं,' ३७ 'तैरेनं', ३८ 'प्राणापानस्त्वा', ४४ 'उरू ते', ४६ 'बहुचारी' एकपदा आसुर्यनुष्टुभः । ४९ 'एष वा ओदनः'

---

१. इस द्वितीय पर्याय में प्रकाशित मूल संहिताओं की मन्त्र संख्या १८ है। इनको बृहत्० के पटल ७।१४ के अन्त में 'दण्डक' कहा गया है। इन १८ दण्डकों में ७२ अवसान हैं। पञ्चपटलिका (द्वासप्तति पर:।३१।) तथा बृहत्० दोनों इस विभाग में सहमत हैं। शङ्करपाण्डुरङ्ग ने स्वकीय संस्करण के तृतीय भाग पृ० ३५६ के आगे इन १८ दण्डकों को ७२ अवसानों में विभक्त करके छापा है।

२. आदर्श पुस्तकों में त्रिष्टुभः पाठ है।

३. मूल पुस्तकों में 'एकपदासुरी' है।

इति साम्न्यनुष्टुप् । ३३ 'एनमन्याभ्यां श्रोत्राभ्याम्' इत्यादितः सप्तदशाचर्यनुष्टुभः । ३७ 'ततश्चैनमन्यैर्दन्तैः' इति साम्नीपंक्तिः ३३ 'बधिरो भविष्यसि', ३६ 'जिह्वा ते', ४० 'विद्युत् त्वा', ४७ 'सर्पस्त्वा', ४८ 'ब्राह्मणं हनिष्यसि' इत्यासुरी जगत्यः । [1]३४ 'अन्धो भविष्यसि', ३७ 'दन्तास्ते', ४१ 'कृष्या न रात्स्यसी', ४३ 'अप्सुमरिष्यसि', ४५ 'स्रामो भविष्यसि', इत्यासुरी पंक्तयः। ३४ 'सूर्याचन्द्रमसाभ्याम्' इत्यासुरी त्रिष्टुप् । ३५ 'ब्रह्मणा मुखेन', ४६ 'अश्विनोः पादाभ्याम्', ४८ 'ऋतस्य हस्ताभ्याम्' इति याजुषी गायत्र्यः । ३६ 'अग्नेर्जिह्वया', ३७ 'ऋतुभिर्दन्तैः', ४१ 'दिवा पृष्ठेन' इति दैवी पंक्तयः । ३८ 'सप्तर्षिभिः प्राणापानैः', ३९ 'अन्तरिक्षेण व्यचसा' इति प्राजापत्या गायत्र्यः । ३९ 'राजयक्ष्मस्त्वा' आसुर्युष्णिक् । ४१ 'पृथिव्योरसा', ४७ 'सवितुः प्रपदाभ्याम्' दैवीजगत्यौ । ४२ 'सत्येनोदरेण', ४५ 'त्वष्टुरष्ठीवद्भ्याम्', ४९ 'सत्ये प्रतिष्ठाय' इति दैवीत्रिष्टुभः । ४९ 'अप्रतिष्ठानः', एकपदा भुरिक् साम्नी बृहतीति । यदेते पर्य्यायसूक्तमन्त्रा जपकर्मणि प्रयुज्यन्ते, तदाधिकारान्तानेतान विजानीयात् । तदा तथा छन्दस्येता अष्टादश दण्डका भवन्ति । 'सोदक्रामत्', 'य एवं विद्वान्' इत्यादिषु यथाक्षरं यथा तथाधिकारान्तं गायत्र्यादि कृति, धृति, पथ्यापंक्त्यादि छन्दः प्रयुञ्ज्यादिति ॥१४॥

११।३। प० ३

५० 'एतद्वै ब्रध्नस्य' इति सप्तको मन्त्रोक्तदेवत्यस्तत्राद्यासुर्यनुष्टुप् । ५१ 'ब्रध्नलोकः' इत्याचर्युष्णिक् । ५२ 'एतस्माद्वा' इति त्रिपदा भुरिक्साम्नीत्रिष्टुप् । ५३ 'तेषां प्रज्ञानाय' इत्या-

१. मूल पुस्तकों में 'जगत्यावंधो' पाठ है। उपर्युक्त पाठ स्वयं दिया है।

सुरीबृहती । ५४ 'स य एवं विदुषः' इति द्विपदा भुरिक्साम्नीबृहती । ५५ 'न च प्राणम्' इति साम्न्युष्णिक् । ५६ 'न च सर्वज्यानिम्' इति प्राजापत्या बृहती ॥

११।४।१ 'प्राणाय नमः' इति षड्विंशकं भार्गवो वैदर्भिर्मन्त्रोक्तप्राणदेवत्यमानुष्टुभमाद्या शंकुमती । ८ 'नमस्ते प्राण प्राणते' इति पथ्यापंक्तिः । १४ 'अपानति' इति निचृत् । १५ 'प्राणमाहुः' इति भुरिक् । २० 'अन्तर्गर्भः' इत्यनुष्टुब्गर्भा त्रिष्टुप् । २१ 'एकं पादम्' इति मध्येज्योतिर्जगती । २२[1] 'अष्टाचक्रम्' इति त्रिष्टुप् २६ 'प्राण मा मत्' इति बृहतीगर्भेति ॥१५॥

११।५।१ 'ब्रह्मचारीष्णन्' इति षड्विंशकं ब्रह्मा मन्त्रोक्तब्रह्मचारीदेवत्यं त्रैष्टुभमाद्या पुरोऽति जागता विराड्गर्भा । २ 'ब्रह्मचारिणं पितरः' इति पञ्चपदा बृहतीगर्भा विराट्शक्वरी परा उरोबृहती । ६ 'ब्रह्मचार्येति समिधा' इति शाक्वरगर्भा चतुष्पदा जगती । ७ 'ब्रह्मचारी जनयन्' इति विराड्गर्भा । ८ 'आचार्यस्ततक्ष' इति पुरोऽति जागता विराड्जगती । ९ 'इमां भूमिम्' इति बृहतीगर्भा । १० 'अर्वागन्यः परः' इति भुरिक् । ११ 'अर्वागन्य इतः' इति जगती । १२ 'अभिक्रन्दन्' इति शाक्वरगर्भा[2] चतुष्पाद्विराडति जगती । १३ 'अग्नौ सूर्य्ये' इति जगती । १५ 'अमा घृतम्' इति पुरस्ताज्ज्योतिः । १४ 'आचार्यो मृत्युर्वरुणः', १६ 'आचार्यो ब्रह्मचारी' इति सप्तानुष्टुभः । २३ 'देवानामेतत्' इति पुरोबार्हतातिजागतगर्भा । २५ 'चक्षुः श्रोत्रम्' इत्येकावसानार्च्युष्णिक् । २६ 'तानि कल्पत्' इति मध्येज्योतिरुष्णिग्गर्भा ॥

---

१. ११।४।२२ ऋ० १०।८।७।
२. इ. वी. में 'गर्भापरा' चतुष्पात् है। परञ्च क. व. द्वि में परा नहीं।

११।६।१ 'अग्नि ब्रूमः' इति त्रयोविंशकं शंतातिश्चान्द्रमसमुत मन्त्रोक्तदेवत्यमानुष्टुभम्। २३ 'यन्मातली रथक्रीतम्' इति बृहतीगर्भेति ॥१६॥

११।७।१ 'उच्छिष्टे नाम रूपम्' इति सप्तविंशतिरथर्वा मन्त्रोक्तोच्छिष्टोऽध्यात्मदैवतमानुष्टुभम्। ६ 'ऐन्द्राग्नं पवमानम्' इति पुरोष्णिग्बार्हत परा। २१ 'शर्कराः सिकताः' इति स्वराट्। २२ 'राद्धिः प्राप्तिः' इति विराट्पथ्याबृहती ॥

११।८।१ 'यन्मन्युः' इति चतुस्त्रिंशत्कौरुपथिरध्यात्मसन्युदैवतमानुष्टुभम्। ३३ 'प्रथमेन प्रमारेण' इति पथ्यापंक्तिः ॥

११।९।१ 'ये बाहवः' इति षड्विंशकं कांकायनो मन्त्रोक्तार्बुदिदेवत्यमानुष्टुभमाद्या सप्तपदा विराट्शक्वरी त्र्यवसाना। ३ 'उत्तिष्ठतमा रभेथाम्' इति परोष्णिक्। ४ 'अर्बुदिर्नाम' इति त्र्यवसानोष्णिग्बृहतीगर्भा परा त्रिष्टुप् षट्पदाति जगती। ९ 'अलिक्लवा जाष्कमदा', ११ 'आ गृह्णीतम्', १४ 'प्रतिघ्नानाः[1] सम्' पथ्यापंक्तयः। १५ 'श्वन्वतीः' इति सप्तपदा त्र्यवसाना शक्वरी। १६ 'खडूरेधिचङ्क्रमाम्' इति त्र्यवसाना पञ्चपदा विराडुपरिष्टाज्ज्योतिस्त्रिष्टुप्। १७ 'चतुर्दंष्ट्रान्' इति त्रिपदा गायत्री। २२ 'ये च धीराः' इति त्र्यवसाना सप्तपदा शक्वरी। २३ 'अर्बुदिश्च त्रिषन्धिः' इति पथ्यापंक्तिः। २४ 'वनस्पतीन् वानस्पत्यान्' इति द्वे त्र्यवसाने सप्तपदे शक्वर्यौ। २६ 'तेषां सर्वेषाम्'[2] इति पथ्यापंक्तिरिति ॥१७॥

११।१०।१ 'उत्तिष्ठत सं नह्यध्वमुदाराः' इति सप्तविंशतिः

१. बी 'संधावमिति' अधिक पाठ है।

२. बी. 'सर्वेषाम्' नहीं।

भृग्वंगिरा मन्त्रोक्तत्रिषन्धिदेवत्यमानुष्टुभमाद्या विराट्पथ्याबृहती । २ 'ईशां वो वेद राज्यम्' इति त्र्यवसाना षट्पदा त्रिष्टुबगर्भातिजगती । ३ 'अयोमुखाः सूचीमुखाः' इति विराडास्तारपंक्तिः । ४ 'अन्तर्धेहि' इति विराट् । ८ 'अवायन्ताम्' इति विराट्त्रिष्टुप् । ९ 'यामिन्द्रेण[1] इति पुरोविराट्पुरस्ताज्ज्योतिस्त्रिष्टुप् । १२ 'सर्वांल्लोकान्' इति पंचपदा पथ्यापक्तिः । १३ 'बृहस्पतिराङ्गिरसः' षट्पदा जगती । १६ 'वायुरमित्राणाम्' त्र्यवसाना षट्पदा ककुम्मत्यनुष्टुप्[2] त्रिष्टुबगर्भा शक्वरी । १७ 'यदि प्रेयुः' पथ्यापंक्तिः । २१ 'मूढा अमित्राः' त्रिपदा गायत्री । २२ 'यश्च कवची' विराट् पुरस्ताद्बृहती । २५ 'सहस्रकुणपा' ककुप् । २६ 'मर्माविधम्' [3]प्रस्तारपंक्तिरिति ॥१८॥

इति श्री ब्रह्मवेदोक्तमन्त्राणां बृहत्सर्वानुक्रमणिकायां सप्तमः पटलः समाप्तः सम्पूर्णता[4]मेति । एवं षड्विंशदर्थसूक्तान्यथर्ववेदसंहितायाम् ॥



१. घ. इति नहीं ।    २. बी. त्रिष्टुब् नहीं ।

३. बी. स्तारपंक्तिः ।

४. मूल लेखों में 'मिति' है ।

# अथ द्वादशं काण्डम्

१२।१। [1]ओं अथानुवाका उच्यन्ते। १ 'सत्यं बृहत्' इति त्रिषष्टिरथर्वा भौमं त्रैष्टुभम्। २ 'असंबाधम्' इति भुरिक्। ४ 'यस्याश्चतस्रः इति तिस्रः' १० 'यामश्विनौ' इति त्र्यवसानाः षट्पदा जगत्यः। ७ 'यां रक्षन्ति' इति प्रस्तारपंक्तिः। ८ यार्ण-वेधि' ११ 'गिरयस्ते' इति त्र्यवसाने षट्पदे विराडष्टी। ६ 'यस्यामापः' इति परानुष्टुप्। १२ 'यत् ते मध्यम्' इति द्वे, १५ 'त्वज्जाताः' इति शक्वर्यः'। पूर्वे द्वे त्र्यवसाने, तिस्रोऽपि पञ्चपदाः। १४ 'यो नो द्वेषत्' इति महाबृहती। १६[2] 'ता नः प्रजाः' इति साम्नीत्रिष्टुप्। १८ 'महत् सधस्थम्' इति त्र्यवसाना षट्पदा त्रिष्टुबनुष्टुब्गर्भातिशक्वरी। १६ 'अग्निर्भूम्याम्' इति द्वे पुरोबृहत्यौ, द्वितीया विराडिति ॥१॥

२१ 'अग्निवासाः' इति साम्नीत्रिष्टुप् प्रागुक्ता। १६ 'ता नः' इति चोभे एकावसाने। २२ 'भूम्यां देवेभ्यः' इति त्र्यवसाना षट्पदा। २३ 'यस्ते गन्धः पृथिवि' इति [3]पञ्चपदोभे विराडति जगत्यौ। २४ 'यस्ते गन्धः पुष्करम्' इति पञ्चपदानुष्टुब्गर्भा जगती। २५ 'यस्ते गन्धः पुरुषेषु' इति सप्तपदोष्णिगनुष्टुब्गर्भा-शक्वरी। २६ 'शिला भूमिः' इति तिस्रोऽनुष्टुभः। ३० 'शुद्धा न आपः' इति विराड्गायत्री। ३२ 'मा नः पश्चात्' इति पुरस्ता-ज्ज्योतिः। ३३ 'यावत् ते', ३५ 'यत् ते भूमे', ३६ 'यस्यां पूर्वे भूतकृतः' इति तिस्रोऽनुष्टुभः। ३४ यच्छयानः' इति त्र्यवसाना

---

१. घ० ओं नहीं। गु० श्रीगणेशायनमः अधिक है।

२ सब मूल आदर्श पुस्तकों में पाठ 'महाबृहत्येता नः प्रजा इति' है। 'महाबृहती एता नः' पाठ संहिता में कहीं नहीं 'ता नः' पाठ हम ने दिया है।

३. क. घ. गु. 'पंचपदे उभे'। ङ. वी. ठीक है जो ऊपर दिया है।

षट्पदा त्रिष्टुब्बृहतीगर्भाति जगती। ३६ 'ग्रीष्मस्ते' इति विपरीतपादलक्ष्मा पंक्तिः। ३७'यापसर्पम्' इति पञ्चपदा त्र्यवसाना शक्वरी। ३८ 'यस्यां सदः' इति त्र्यवसाना षट्पदा जगती। ४१ 'यस्यां गायन्ति' इति [1]सप्तपदा ककुम्मती शक्वरी। ४२ 'यस्यामन्नम् इति स्वराडनुष्टुप् ॥२॥

४३ 'यस्याः पुरः' इति विराडास्तारपंक्तिः। ४४ 'निधिं[2] बिभ्रती' इति द्वे, ४६ 'ये त आरण्याः' इति जगत्यः। ४६ 'यस्ते सर्पः' इति षट्पदानुष्टुब्गर्भा परा शक्वरी। ४७ 'ये ते पन्थानः' इति षट्पदोष्णिगनुष्टुब्गर्भा पराति शक्वरी। ४८'मल्वं बिभ्रती' इति पुरोऽनुष्टुप्। ५० 'ये गन्धर्वाः' इत्यनुष्टुप्। ५१ 'यां द्विपादः' इति त्र्यवसाना षट्पदानुष्टुब्गर्भा ककुम्मती शक्वरी। ५२ 'यस्यां कृष्णम्' इति पञ्चपदानुष्टुब्गर्भा परातिजगती। ५३'द्यौश्चमे' इति द्वे, ५६ 'ये ग्रामाः', ५९ 'शन्तिवा', ६३ 'भूमे मातः' इत्यनुष्टुभः पूर्वा पुरोबार्हता। ५७ [3]'अश्व इव' इति जगती। ५८ 'यद् वदामि' इति पुरस्ताद्बृहती। ६१ 'त्वमस्य' इति पुरोबार्हता। ६२ 'उपस्थास्ते' इति परा विराट् ॥३॥

१२।२।१ 'नडमा रोह' इति पञ्चपञ्चाशत् भृगुराग्नेयमुत मन्त्रोक्तदेवत्यं त्रैष्टुभम्। २ 'अघशंसदुःशंसाभ्याम्', ५ 'यत् त्वा क्रुद्धाः' इत्यनुष्टुभौ। ३ 'निरितः' इत्यास्तारपंक्तिः। ६ 'पुनस्त्वादित्याः' इति भुरिगार्षी पंक्तिः। ७ 'यो अग्निः

---

१. १२।१।४१ को क. ङ. बी. में सप्तपदा और घ० ह्वि० में षट्पदा लिखा है।

२. घ० बिभ्रत्निति।

३. १२।१।५७ का छन्द ह्वि० ने जगती के स्थान पर 'पुरोति जागताजगती' लिखा है परन्च हमारे पास जितने भी आदर्श पुस्तक हैं उन सब में जगती है अतः ह्वि० का पाठ चिन्तनीय है।

क्रव्यात्' इति जगती। ८ 'क्रव्यादमग्निं प्र हिणोमि' इति भुरिक्। ६ 'अग्निमिषितः' इत्यनुष्टुब्गर्भा विपरीतपादलक्ष्मा पंक्तिः ।४।।

१२ 'देवो अग्निः' इति नवानुष्टुभः। तत्र १६ 'अग्नेयेभ्यस्त्वा' इति ककुम्मती परा बृहती। १८ 'समिद्धो अग्न आहुत' इति निचृत्। [1]२१ 'परं मृत्यो' इति त्रयोदश मार्त्व्यः। ३४ 'अपावृत्य' इति तिस्रः। ३८ 'मुहुर्गृध्यैः' इति चतस्रोऽनुष्टुभः। ३७ 'अयज्ञियो हतवर्चा' इति पुरस्ताद्बृहती। ४० 'यद् रिप्रम्' इति पुरस्तात्ककुम्मत्यनुष्टुप्। ४२ 'अग्ने अक्रव्यात्' इति त्रिपदैकावसाना भुरिगार्चीगायत्री। ४३ 'इमं क्रव्यात्' इत्यनुष्टुप्। ४४ 'अन्तर्धिः' इत्येकावसाना द्विपदार्चीबृहती। ४५ 'जीवानामायुः' इति जगती। ४६ 'सर्वानग्ने' इत्येकावसाना द्विपदा साम्नीत्रिष्टुप्। ४७ 'इममिन्द्रम्' इति पंचपदा बार्हत वैराजगर्भा जगती। ४८ 'अनड्वाहम्' इति द्वे भुरिजौ। ५० 'ते देवेभ्यः' इत्युपरिष्टाद्विराड्बृहती। ५१ 'ये श्रद्धा', ५४ 'इषीकाम्' इत्यनुष्टुभौ। ५२ 'प्रेव' इति पुरस्ताद्विराड्बृहती। ५५ 'प्रत्यञ्चमर्कम्' इति बृहतीगर्भेति ।।५।।

१२।३।१ 'पुमान् पुंसः' इति षष्टिर्यमो मन्त्रोक्तस्वर्गौदनाग्निदेवत्यं त्रैष्टुभम्। आद्या भुरिक्। १२ 'पितेव पुत्रान्' इति जगती। १३ 'यद्यत् कृष्ण' इति, [2]अथ १७ 'स्वर्गं लोकम्' इति स्वराडार्षी[3] पंक्ती। २१ 'पृथग्रूपाणि' इति द्वे। ८ 'दक्षिणां

---

१. १२।२।२१, २२, २३, २४, २५, ३० तथा ३१ मन्त्र ऋग्वेद १०।१८।१, ३, ४, ६, ५, २ तथा ७ में क्रम से मिलते हैं ऋ० वे० में इनका ऋषि सङ्कुसुको यामायन है। १२।२।२६ ऋ० १०।५३।८ में आता है।

२. मूल पुस्तकों में पाठ इत्याथा है कुछ स्पष्ट पाठ नहीं।

३. सब मूल पुस्तकों में 'पंक्तिः' एकवचन का पाठ है।

